त्येतावत्परमार्थोऽयं कार्यकारणभावः" इति समाधानाभिधानेन चिज्जगतोः कार्यकारणभावस्याव्यक्तैवावेदिता । स्पन्दप्रदीपिकायां तूत्पलाचार्येण—

यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम् ।
तस्यानावृतरूपत्वान्न निरोधोऽस्ति कुत्रचित् ॥

(स्पन्दप्रदीपिकायां २)

इति कारिकाविवरणे—"यत्र यस्मिन् स्पन्दतत्त्वे इदं सर्वं जगल्लक्षणं ज्ञानरूपतया शक्त्यात्मना स्थित, निमेषावस्थायां तस्यानावृतरूपत्वाद्बोधरूपतया अनाच्छादितस्वरूपत्वाद्धेतोर्न कुत्रचिन्निरोधोऽस्ति । यतो बोध्यस्य स्वयं सत्तैव नास्ति" इत्याद्यभिदधता हेमाकाशादिदृष्टान्तेन शुद्धचिद्रूपस्यैव समस्तजगद्रूपेण प्रथेति व्यक्तीकृतम् । एतावतापि चितः परिणाम्युपादानत्वं विवर्तोपादानत्वं वा उभयमपि वेति न विशदीकृतम्। परन्तु हेमदृष्टान्तप्रदर्शनात्परिणाम्युपादानत्वं आकाशदृष्टान्तप्रदर्शनाद्विवर्तोपादनत्वं च विवक्षितमिति प्रतीयते ॥

वटकणिकान्यायेन शिवे सूक्ष्मतया अवास्थितमेव समस्तं सदाशिवादिपृथिव्यन्तं तत्त्वजातं शिवशक्त्युन्मिषितमिति शिवो जगतः कर्तेत्युच्यते । उक्तं चेदं भगवत्पादैः श्रीशङ्करगुरुभिः सौन्दर्यलहर्याम् "शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्" इत्यादिना ॥

वस्तुतस्तु परमशिवस्याभिन्ननिमित्तोपादानत्वस्यैत[1]त्सिद्धान्तसम्मततया मायाद्वयोपहितस्यैव तदभ्युपगमेन विशेषणीभूतमायांशेन परिणामो विशेष्यस्वरूपांशेन विवृत्तिश्चेति विवर्तपरिणामौ द्वावप्युपपन्नावेव ॥

---

[1] ब्रह्मसूत्रश्रीकण्ठभाष्ये प्रकृत्यधिकरणे व्यक्तम्.

शक्तिश्चेयं शक्तिशक्तिमतोरभेदन्यायेन शिवादभिन्ना संविन्मयी हृदयविमर्शसारोर्मिप्रत्यभिज्ञापरामर्शादिपदाभिधेया च । "चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" इति प्रत्यभिज्ञासूत्रे (प्र. सू. १)

इच्छा सैव स्वच्छा
सन्ततसमवायिनी सती शक्तिः ।
सचराचरस्य जगतो
बीजं निखिलस्य निजविलीनस्य ॥

इति षट्त्रिंशत्तत्त्वसन्दोहे च शिवशक्त्यैव सूक्ष्मतया शिवावस्थितसमस्त-जगद्बीजभूतया सर्वमिदमून्मील्यत इति व्यक्तीकृतम् ॥

शिव एवाणवादिमलावृतो मायया निगूहितैश्वर्यो जीवभावमापन्नः संसारिव्यपदेशभाक् तत्त्वशोधनेन नित्यनिर्मलनिर्विकल्पाद्वयस्वस्वरूप-परिज्ञानतः स्वैश्वर्यप्रत्यभिज्ञः स्वस्वरूपप्रतिष्ठितो भवतीत्येतत्तन्त्र-सिद्धान्तः । अभिहितं चैतत्पराप्रवेशिकायाम्—"यदा तु परमेश्वरः परमेश्वर्या मायाशक्त्या स्वरूपं गूहयित्वा सङ्कुचितग्राहकतामश्नुते तदा पुरुषसंज्ञोऽयमेव मायामोहितः कर्मबन्धनः संसारी परमेश्वरादभिन्नोऽपि । अस्य मोहः परमेश्वरस्य न भवेत्, इन्द्रजालमिवैन्द्रजालिकस्य स्वेच्छया सम्पादितभ्रान्ते । विद्याभिज्ञापितैश्वर्यस्तु चिद्घनो [1] मुक्तः परमशिव एव" इत्यादिना ॥ [2] श्रीकण्ठभाष्येऽपि—

शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः ।
शक्तिस्तु शक्तिमद्रूपाद्व्यतिरेकं न गच्छति ॥
तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव ।
शक्तिशक्तिमतोर्यस्मादभेदः सर्वदा स्थितः ॥

---

[1] मुक्त इति । पुनर्जन्म बन्धविरहात् देहे स्थितेऽपि मुक्त इति व्यपदेशयोग्य इति भावः । पतिते तु परमशिवस्वरूप एवेति अत्र टिप्पणी. [2] (ब्र. सू. अ. १. पा. २ अधि. १).

अतस्तद्धर्मधर्मित्वात्परा शक्तिः परात्मनः ।
न वह्नेर्दाहिका शक्तिर्व्यतिरिक्ता विभाव्यते ॥

इत्यभियुक्तोक्त्या,

शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् ।
तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा ॥
परास्य विविधा शक्तिः प्रबोधानन्दरूपिणी ।
एकानेकस्वरूपेण भाति भानोरिव प्रभा ॥

इति वायुसंहितावाक्येन,

"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"
(श्वेता. ३–२)

"एक एव रुद्रो न द्वितीयाय तस्थे य इमान् लोकानीशत ईशिनीभिः" इत्यादि श्रुतिशिरोभिश्च जगतो ब्रह्मणोऽपृथक्सिद्धजन्मस्थितिप्रवृत्तिकत्वात्तद्व्यतिरिक्तता नास्तीत्युक्त्वा "किं बहुना" इत्यादिना शिवशक्तेः सकलचिदचित्प्रपञ्चमहाविभूतिरूपत्वं महासंविदानन्दरूपता च, सर्वज्ञत्वसर्वशक्तत्वादिसमस्तमप्यैश्वर्यं तद्व्यतिरेकेण शिवस्य न सम्भवतीत्यभिधाय महेश्वरादिशब्दाभिधेयत्वमप्यस्योक्तशक्त्यैवेत्यभिहितम् । तदेवमौत्तरस्वतन्त्रशिवाद्वैतपद्धतिः ॥

### दक्षिणदेशीयशैवदर्शनक्रमः ।

स्कन्दनन्दिपरम्पराप्रवर्तितं शैवदर्शनं दक्षिणादिग्भागे [1] तिरुवाडुतुरै, धर्मपुरं, [2] आदित्यपुरमिति द्राविडदेशे प्रथितेषु शैवमठेषु परम्पराप्राप्तमिति दाक्षिणात्यशैवोहः । दर्शनमिदं कामिकादिशैवागममूलकं शिवादिपृथिव्यन्तषट्त्रिंशत्तत्त्वबोधकं तत्त्वशोधनतः पुरुषस्य शिवानन्यत्वबोधनेन शिवस्वरूपत्वप्रापकं जगत्कारणत्वादौ क्वचित् क्वचित्स्व-

---

[1] एव द्राविडभाषाया व्याहारः. [2] अस्य द्राविडभाषायां (सूर्यानार्कोयिल्) इति व्यवहारः.

तन्त्रशिवाद्वैतदर्शनात्प्राभिन्नक्रमसमुपपादितमस्ति । स्फुटं चैतदेतद्ग्रन्थवाचकमहाशयानाम् ॥

## एतद्ग्रन्थकर्तुः गुरुपरम्पराविवेकः ।

एतद्ग्रन्थप्रणेता श्रीशिवाग्रयोगीन्द्रज्ञानशिवाचार्यः स्कन्दपरम्परान्वयी । अयं हि शिवक्कोळुन्दुशिवाचार्यान्तेवासी ततो लब्धशिवतत्त्वबोधः । शिवक्कोळुन्दुशिवाचार्योऽपि स्कन्दपरम्परामधिरूढः । तद्यथा— अखिललोकरक्षकः करुणार्णवः श्रीपरमेश्वरः सकललोकसमुद्दिधीर्षया तत्त्वोपदेशाय स्कन्दनन्दिनावाचार्यपदे संस्थाप्य तयोः स्वयमेवात्मतत्त्वमुपदिदेश [1] । तौ च शिवाज्ञया लोके देशिकपरम्परां प्रवर्तयामासतुः । तत्र स्कन्दप्रवर्तिता देशिकपरम्परा स्कन्दपरम्परा, नन्दिप्रवर्तिता देशिकपरम्परा नन्दिपरम्परेति परम्पराद्वयं लोके व्यश्रूयत । तत्र परमेश्वरात्प्राप्तोपदेशो नन्दिकेश्वरः सनत्कुमाराय, सोऽपि सत्यज्ञानदर्शिने, सोऽपि परञ्ज्योतिर्मुनये, स च मेय्कण्डदेवाय, (सत्यदर्शिने) उपादिशत् । एवं नन्दिकेश्वरपरम्परा विश्रुता । इयं च तिरुवाडुतुरैधर्मपुरादिशैवमठेषु प्रतिष्ठिता ॥

स्कन्दपरम्परायां च [2] वामदेवमुनिः स्कन्दाचार्याल्लब्धोपदेशो नीलकण्ठशिवाचार्याय, स च मणिकर्णिकातीरस्थमहामठालङ्कृतविश्वेश्वरशिवाचार्याय, स च सदाशिवाचार्याय, स च सदाशिवमार्गप्रकाशकदेशिकाय, स च शिवाग्रयोगिशिवक्कोळुन्दुशिवाचार्याय चोपादिशत् । अयं शिवक्कोळुन्दुशिवाचार्यो द्रविडदेशान्तर्गतार्कवने [3] (आदित्यपुरे)

---

1 स्कन्दगुरोः शिवादुपदेशः " श्रीमत्स्कन्दगुरोः शिवेन कथितः " इति सिद्धान्तसारावल्या क्रियापादे षष्ठश्लोके व्यक्तः. 2 वामदेवस्यैतत्सन्तानादिमुनित्वं अत्रैव ग्रन्थे द्वितीयपरिच्छेदे २८ तमपुटे स्फुटमभिहितम् . 3 अस्य द्राविडभाषायां (सूर्यनार्कोयिल् ) इति व्यवहारः.

दक्षिणवीथ्यां मठं संस्थाप्य तत्र स्वपूर्वाचार्यलिङ्गश्रीशिवकामसुन्दरी-समेतज्ञाननटराजं श्रीकालहस्तीश्वरं चार्चयन् शरणागतानां स्वपादसेवकानां पक्वमलानामन्तेवासिनां शिवसिद्धान्ततत्त्वान्युपदिशन् शैवसमयं परिपालयंश्चावर्तत ॥

### एतद्ग्रन्थकर्तुर्देशादिकमाचार्योपसर्पणं च ।

तदा तुण्डीरदेशवास्तव्यविप्रोत्तमकुलप्रसूतः सकलकलाकोविदः शुद्धात्मा नयविनयोज्ज्वलश्चायं ग्रन्थकृत् ज्ञानदेशिकमन्विष्य स्वनगरात् प्रस्थितः पथि शिवस्थलानि पश्यन् कावेर्या उत्तरतीरवासिनः शिवक्कोळुन्दुशिवाग्रयोगिनः शिवानुभवनैपुण्यमुपश्रुत्य त्वरयैव तन्मठिकां प्रविश्य तस्य योगीन्द्रस्य सन्निधिं प्राप्य भस्मरुद्राक्षाद्युपशोभिताङ्गमर्धोन्मीलितनयनयुगलं नासाग्रन्यस्तदृष्टिं करुणार्णवं तं योगिवर्यमद्राक्षीत् । तद्दर्शनमात्रेणैवायं पुलकिताङ्ग आनन्दबाष्पपूर्णलोचनोऽवशो दण्डवत्तत्पादकमलयोः प्रणिपत्य स्वामिन्! करुणार्णव! पाहि मां, भवबन्धान्मोचयेति सप्रश्रयं तं सम्प्रार्थ्य साञ्जलिबन्धस्तत्पुरत एव तस्थौ ॥

### एतद्ग्रन्थकर्तुराचार्यानुग्रहः ।

तदा शिवक्कोळुन्दुशिवाचार्योऽप्यस्य विद्याविलासं विनयातिशयं पक्वचित्ततां भक्तिपारवश्यं च परिपश्यन् हर्षातिशयेनास्य ज्ञानवतीं निर्वाणदीक्षां कारयित्वा दत्वा च शैवसन्न्यासं स्वपरम्पराप्राप्तप्रणवार्थादिकं चोपदिश्यैनमाचार्यपदेऽभिषिच्य शिवाग्रयोगीति स्वपदाभिधानवितरणेन द्वितीयाचार्यमकरोत् ॥

एवमनुगृहीतोऽयं द्वितीयाचार्यः स्वाचार्योपदिष्टवर्त्मना सदा शिवोऽहंभावनया शिवानन्दानिष्ठायां निषण्णोऽतिगतवर्णाश्रमोऽतिवर्णाश्रमशिवाग्रयोगीति पप्रथे ॥

एतद्ग्रन्थकृत्कालः।

अस्य सौम्यजामातृमुनिभिः सह वादश्रवणादयं तत्समानकालिक इति ज्ञायते। [1]जामातृमुनयस्तु लोकाचार्यान्तेवासिनः (A. D. 1370) तमाब्दात् (A. D. 1444) तमाब्दं यावदवर्तन्त॥

किञ्चायं श्रीकर्णाटकभूपतेः सदाशिवरायस्य चिनचेप्पय्यसुतस्याच्युतनाम्नश्चोळनरेशस्य च कालेऽवर्ततेति एतद्योगीन्द्रविरचितसन्न्यासपद्धतीयश्लोकैरवगम्यते। [2]सन्न्यासपद्धतौ हि—

श्रीकर्णाटरमापतौ गजपतिप्राज्योपदानेकप-
स्फायद्दानमहापगाल्हारिकानाव्योपकण्ठस्थले।
अश्वेशार्पितघोटानिष्ठुरखुरक्षुण्णारिराणमण्डली-
कोटीरेन्द्रमणौ सदाशिवमहीराये महीं रक्षति॥
तस्याज्ञापरिपालके रिपुमहीपालाब्धिमन्थाचले
कन्याधेनुसहस्रभूरितिलराश्यन्नाग्रहारप्रदे।
सह्योर्वीधरकन्यकासहचरीं भूदेवदेवाश्रयां
चोळक्ष्मां चिनचेप्पयाच्युतनृपे तञ्जापुरे शासति॥
सदाशिवाचार्यदयानपायः
शिवागमाम्भोनिधिकर्णधारः।
शिवाग्रयोगी जगदेकमान्यः
स शैवसन्न्यासविधिं करोति॥

---

[1] इदं च काव्यविनोदादिबिरुदाङ्कितै. M. कृष्णमाचार्यैराङ्गलभाषायां विरचिते संस्कृतसाहित्यचरिते २८१ तमपुटे स्पष्टीकृतम्। सौम्यजामातृमुनयः (24-1-1370 A. D.) 1192 तमशकीयसाधारणसंवत्सरस्य तुलामासे २६ तमदिवसे शुक्लचतुर्दश्यां मूलर्क्षे गुरुवासरे कुन्तीनगरे जाता इति M. कृष्णमाचार्यविरचितसंस्कृतसाहित्यचरित्रे 281 तमपुटे टिप्पण्यां व्यक्तम्. [2] अस्य "स शैवसन्न्यासविधिं करोति" इति ग्रन्थोक्त्या सन्न्यासविधिरिति सुश्लिष्टं नामधेयं भवितुमर्हति.

इति श्लोकैः शैवसन्न्यास (पद्धतेः) विधेः शिवाग्रयोगिप्रणीतत्वं शिवाग्रयोगिनः कर्णाटक्षितिपालसदाशिवरायसमानकालिकत्वं चोलनरेशाच्युतरायसमानकालिकत्वं च व्यक्तं प्रतीयते। तद्यथा—[1] अच्युतरायस्तु नायकराजक्रमागतः चिनचेप्पय्यनायकान्मूर्त्यम्बायां जातः क्रिस्तशके मार्की (A. D. 1572) तमाब्दात् (A.D. 1614) तमाब्दं यावच्चोळराज्यमकरोत्। मूर्त्यम्बा च विजयनगराधिपाच्युतरायराज्ञ्यास्तिरुमलाम्बायाः कनिष्ठसोदरी। अच्युतरायश्च क्रिस्तशके (A. D 1530) तमाब्दात् (A. D. 1542) तमाब्दं यावद्विजयनगरमशिषत्। तञ्जापुरराज्यं च तेन मूर्त्यम्बायै तदुद्वाहे यौतकतया प्रादीयत। नायकराजक्रम समागतेषु तञ्जापुराधिपतिषु अयं चिनचेप्पय्यनायकः प्रथमः। अयं च क्रिस्तशके मार्की (A. D. 1549) तमाब्दात् (A. D. 1572) तमाब्दं यावत्तञ्जापुरं शशास। एवं च शिवाग्रयोगीन्द्रेण सन्न्यास (पद्धतौ) विधौ "चिनचेप्पयाच्युतनृपे तञ्जापुरे शासति" "स सन्न्यासविधिं करोति" इत्युक्तया चिनचेप्पय्यनायकसुताच्युतनायकसमानकालिकत्वस्य स्वस्मिन् विशदीकरणादयं क्रिस्तशके षोडशशताब्द्या उपान्त्यभागे सप्तदशशताब्द्या आद्यभागे चावर्ततेति प्रतीयते ॥

एवं "श्रीकर्णाटरमापतौ—सदाशिवराये मही रक्षति" "स शैवसन्न्यासविधिं करोति" इति सन्न्यासपद्धतीयश्लोकसन्दर्भेण योगीन्द्रस्यास्य कर्णाटक्षितिपसदाशिवमहारायसमानकालिकत्वमपि व्यक्तमेव। तथा हि—सदाशिवरायो विजयनगरराजपरम्परायामच्युतरायसहोदरस्य रङ्गरायस्य पुत्रः तुळुवराजसन्ततावन्तिमश्च। अयं च क्रिस्तशके (A. D. 1542) तमाब्दात (A. D. 1570) तमाब्दं यावद्विजय-

[1] इदं M. कृष्णमाचार्यस्याङ्ग्लसंस्कृतसाहित्यचरिते व्यक्तम्.

नगराधिपतिरासीत् । शिवाग्रयोगीन्द्रज्ञानशिवाचार्यस्य चैतत्समानकालिकत्वोक्तया शिवाग्रयोग्ययं क्रिस्तशके षोडशशताब्द्या मध्यभागे उपान्त्यभागे चासीदिति ज्ञायते । कर्णाटमहीपतिसदाशिवमहारायतञ्जापुराधिपत्यच्युतनृपयोः समानकालिकत्वेऽपि षोडशशताब्दीसप्तदशशताब्द्योः कियानन्वय इति तु न निर्णयमधिरोहति । स्यान्नाम किञ्चिदिव शताब्द्यन्वयेयत्ताऽनिर्णयस्तयोः । सर्वथा योगीन्द्रोऽयं क्रिस्तशके षोडशशताब्द्या मध्यभागे सप्तदशशताब्द्या आद्यभागे चावर्ततेत्यविवाद एव । अस्यापि शताब्द्यन्वयेयत्ताविषयेऽनिश्चय एव ॥

अपि च सदाशिवरायः क्रिस्तशके (A. D. 1578) तमाब्दे राज्यमशिषदिति तदातनदक्षिणहिन्दुस्थानचरित्रशासनग्रन्थोऽपि (Sewell) सदाशिवरायस्य क्रिस्तशकीयषोडशशताब्द्युपान्त्यभागान्वयमवगमयति । अङ्गीक्रियते च शिलाशासनादीनामैतिहासिककालनिर्णये महत्प्रामाण्यं सर्वैरपीतिहासविमर्शकैः । शिवाग्रयोगिज्ञानशिवाचार्यस्य चोक्तसदाशिवरायसमकालिकत्वस्य निश्चिततया षोडशशताब्द्युत्तरार्धान्वयो व्यक्त एव ॥

सङ्ख्योद्धारसम्प्रदायानुरोधेनापि रिपु ६ महीपाल ८ अब्धि ४ मन्थाचल १ इत्यङ्कप्रकाशकः सन्न्यासपद्धतीय "रिपुमहीपालाब्धिमन्थाचले" इति श्लोकभागः[1] १४८६ तमशकसंवत्सरमवगमयन् तत्समस्य (A. D 1564) तमस्य क्रिस्तशकाब्दस्य प्रदर्शनेन शिवाग्रयोगीन्द्रस्य क्रिस्तशकषोडशशताब्द्युत्तरार्धान्वयं स्पष्टयति ॥

**एतद्ग्रन्थकर्तुः सौम्यजामातृमुनिसमानकालिकत्वानुपपत्तिः ।**

एव चास्य योगीन्द्रस्य क्रिस्तशके (A D. 1370) तमाब्दात् (A. D. 1444) तमाब्दपर्यन्तजीविसौम्यजामातृमुनिभिः सह वाद-

---

1 "अङ्कानां वामतो गतिः" इति न्यायेनैव सङ्ख्यालाभो बोध्यः.

वार्तया पूर्वोक्तसदाशिवमहारायाच्युतनृपाभ्यां प्राचीनत्वस्य वक्तव्यत्वेऽपि प्रबलसन्न्यासपद्धत्याद्यनुसारेण सौम्यजामातृमुनितोऽर्वाचीनत्वमेव युक्तमित्युत्पश्यामः ॥

**शैवागमास्तद्विभागादिकं च ।**

शैवागमास्तावदष्टाविंशतिर्ज्ञानक्रियायोगचर्याख्यैश्चतुर्भिः पादैः साक्षादीश्वरस्य मुखतः सम्प्रवृत्ताः । [1] अत्र कामिकादयो दश शैवागमाः सदाशिवपदवासिभ्य. शिवस्वरूपेभ्यः प्रणवादिभ्य उपदिष्टाः । विजयादयोऽष्टादश रौद्रागमा ईश्वरतत्त्ववासिभ्योऽनादिरुद्रेभ्य उपदिष्टाः । अत एव कामिकादयो दश शैवागमाः, विजयादयोऽष्टादश रौद्रागमा इति व्यवह्रियन्ते । सर्वे चैते परमशिवस्यावयवा इति शैवागमसिद्धान्तः । अत्र शैवसिद्धान्ततत्त्वानि ज्ञानपादे निरूपितानि । तत्त्वप्रेरकाधिदेवताविज्ञानतद्वशीकरणोपायौ क्रियापादे प्रतिपादितौ । तत्त्वानि संशोध्य अध्वमूर्तीः सम्पूज्य शिवज्ञानप्राप्त्यै अवशस्य मनसो योगेन वशीकृतस्य शिवे संयोजनं योगपादेऽभिहितम् । कर्मबाहुल्यात् तनुकरणभुवनभोगानामनेकत्वान्मनसश्चाञ्चल्यातिशयाच्च ज्ञानयोगमाप्तुमसमर्थानां तत्प्राप्त्यै सदाचारानुष्ठानं चर्यापादे वर्णितम् । शिवस्वरूपप्रणवादीनां ज्ञानक्रमेणोपदेशः । अनादिरुद्राणां च चर्यादिक्रमेणेति आगमोपदेशक्रमविदां निश्चयः ॥

**शिवज्ञानप्रभेदस्तदुपदेशक्रमश्च ।**

अत्र शिवज्ञानस्यावबोधरूपता शब्दरूपता चेति द्वैविध्यमस्ति । अनाद्याणवमलरहिततया आद्यन्तरहितस्य सर्वप्रकाशकस्य सर्वानुग्राहकस्य परमशिवस्य ज्ञानं त्ववबोधरूपम् । शास्त्रमेव शब्दरूपम् । परमकारुणिकः परमशिवः सृष्टिकाले स्वनिष्ठावबोधरूपज्ञानमेव सकलात्मानु-

---

[1] स्पष्टमिद कामिके तन्त्रोत्पत्तिपटले.

गृहाय गुरुपरम्पराक्रमेण शब्दद्वारा योग्येषु प्रवर्तयामास । स चोपदेशो महौघक्रमः प्रतिसंहिताक्रमश्चेति द्विविधः । अत्र महाप्रवाहवदविच्छिन्न-गुरुपरम्परोपदेशक्रमो महौघक्रमः ; शास्त्रोपदेशक्रमस्तु प्रतिसंहिताक्रम इति शैवागमतत्त्वविदां रहस्यम् ॥

## शैवागमप्रामाण्यम् ।

वेदवदीश्वरमुखनिस्सृतत्वादेतेषामागमानां वेदवदेव प्रामाण्यम् ॥

## एतद्ग्रन्थस्य शैवागमसम्बन्धः ।

अयं ज्ञानशिवाचार्योऽपि आगमेभ्यो ज्ञानपादीयतत्त्वान्येव बाहुल्येनोपादाय ग्रन्थमिमं प्राणैषीत् । तत्रापि पौष्करमृगेन्द्रागमौ बहुत्र प्रमाणतयोदाहार्षीत् ॥

## एतद्ग्रन्थस्वरूपं तत्प्रमेयस्तन्नामनिर्देशश्च ।

ग्रन्थेऽस्मिन् प्रमाणपतिपशुपाशमुक्तयः क्रमेण पञ्चभिः परिच्छेदैर्निरूपिताः । योगीन्द्रोऽयं शिवज्ञानसूत्राणां सङ्ग्रहविस्तराभ्यां भाष्यं विरचय्य प्रेक्षावत्सौकर्याय तस्यैव पुनः सङ्ग्रहतया ग्रन्थमिमं रचयामास । अत एवास्य ग्रन्थस्य परिभाषेति नामैकदेशः स्थाने भवति । शैवसिद्धान्ततत्त्वानां सङ्ग्रहेण प्रतिपादनात् शैवपरिभाषेति ग्रन्थस्यास्यान्वर्थनामैवैतत् । यद्यप्यत्र ग्रन्थादौ द्वितीय-श्लोके "शैवभाषां वदाम्यहम्" इति ग्रन्थकृता निर्देशाद्ग्रन्थस्यास्य शैवभाषेत्येवाभिधानमुचितम् । तथापि परिच्छेदसमाप्तौ ग्रन्थसमाप्तौ च "शैवपरिभाषायां" इति निर्देशदर्शनाद्भाषापरिभाषाशब्दयोरेकार्थ-कत्वसम्भवाच्च शैवपरिभाषेत्येव ग्रन्थस्य नाम गृहीतम् ॥

## प्रथमपरिच्छेदप्रतिपाद्यम् ।

सर्वेऽपि दर्शनकाराः "सुखं मे भूयात् दुःखं मे मनागपि माभूत्" इति समस्तप्राण्यभिलाषानुरोधेन सुखायैव प्रवर्तमाना मोक्ष-

सुखस्यैव परमत्वोपपत्त्या तस्यैव प्राप्त्यै तत्त्वानि शोधयन्तो मोक्षसाधनमेव निरूपयन्तीति सर्वजनविदितमेव। सति चैवमयं योगिवर्योऽपि शैवागमसिद्धान्तानुरोधेन पशौ शिवत्वाभिव्यक्तिरूपपरमपुरुषार्थस्यैव प्राप्त्यै पशोः पत्यनन्यतासाक्षात्कारस्यैवोपायतया तस्य पतिपशुपाशानां परिज्ञानाधीनत्वेन तस्य च प्रमाणायत्तत्वादादौ प्रथमपरिच्छेदेन प्रमाणान्युपपादयामास ॥

प्रत्यक्षे विशेषः।

अत्र च प्रत्यक्षानुमानागमानां त्रयाणामेव प्रमाणत्वोपपत्त्या इतरेषां यथासम्भवमत्रैवान्तर्भाव उपपादितः। आत्मचिच्छक्तेरेव प्रमाणत्वमुपपाद्य तथागताद्युक्तप्रमाणलक्षणान्युपमर्दितानि। अर्थसम्बद्धाचिच्छक्तेश्च प्रत्यक्षत्वोपपादनपूर्वकं तत्र सम्बन्धोपपत्तये संयोगादयः षड्विधाः सम्बन्धा निरूपिताः ॥

अनुमाने विशेषकथनम्।

अनुमानेऽपि कतिपयविशेषोपपादनपूर्वकं हेत्वाभासा विस्तरेणोपपादिताः। न्यायसूत्रेऽनिरूपिता अपि शैवागमोक्ताः कतिपयदृष्टान्ताभासाः पृथङ्निरूपिता नितान्तं मतिवैशद्यमुत्पादयन्ति। निग्रहस्थानानि च मतिवैशद्यायैव विशदमुपपादितानि ॥

शब्दे विशेषोक्तिः।

शब्दप्रमाणेऽपि परमाप्तपरमेश्वरप्रोक्तत्वेनैव वेदानां प्रामाण्यमुपपाद्य आगमानामपि तन्न्यायेन प्रामाण्यमुपपादितम्। ईश्वरोक्तत्वाविशेषेऽपि [1] वामादीनां स्वतन्त्रकर्मप्रतिपादकत्वादसुरादिव्यामोहकत्वा-

---

[1] वामादिनि च—

वामं पाशुपतं चैव वातुलं चैव भैरवम्।
न सेव्यमेतत्कथितं वेदबाह्यं तथेतरत् ॥

इति कामिके प्रोक्तानि.

चाधिकारिविशेषं प्रत्येव प्रामाण्यमुपपाद्य क्वाचित्कतन्त्रानुष्ठाननिषेधस्य वेदविरुद्धतन्त्रनिषेधपरत्वं प्रत्यपादि । षट्त्रिंशत्तत्त्वातीतपरममोक्षप्रतिपादकत्वाच्छैवागमानां प्रकृत्यधोगतचतुर्विंशतितत्त्वप्रतिपादकैः परस्परविरुद्धैरार्षदैवततन्त्रैरगतार्थत्वोपपादनपूर्वकं सर्वज्ञेश्वरप्रोक्तागमैरेव ज्ञानमोक्षयोः सिद्धिः स्पष्टीकृता । अर्थप्रत्ययोपपत्तये स्फोटवादोऽङ्गीकृतः । प्रामाण्यस्य चोत्पत्तिग्रहणे स्वत एवाङ्गीकृते । प्रमापरपर्यायचिच्छक्तेः प्रमाणत्वोक्त्या फलप्रमाणवादोऽत्र तन्त्रे स्वीकृतः । प्रामाण्योत्पत्तिग्रहणयोश्च मीमांसकमतानुसरणेऽपि प्रमाणेयत्तादिषु वैशेषिकसिद्धान्तोऽनुसृतः ॥

द्वितीयपरिच्छेदप्रतिपाद्यम् ।

प्रमेयनिरूपणे च स्कन्दसन्तानादिमुनिवागदेवानुरोधेन रौरवागमोक्तरीत्या पतिपशुपाशभेदेन पदार्थत्रैविध्यमुपगम्य पत्युरेव प्राधान्याद्द्वितीयपरिच्छेदेन पतिपदार्थो निरूपितः ॥

### पत्युः स्वरूपादिकम्

अयं च गुणत्रयाधिष्ठितानां ब्रह्मविष्णुरुद्राणां कारणात्मकः स्थूलसूक्ष्मशून्यरूपरहितो निर्मलनिरतिशयस्वप्रकाशज्ञानानन्दात्मको गुणनामक्रियारहितोऽपि योगवृत्त्या ब्रह्मविष्णुरुद्रादिसर्वशब्दवाच्यो भवति। जगत्सृष्टिस्थितिसंहारतिरोधानानुग्रहकारित्वं चास्य तटस्थं रूपम्। अयं च वेदागमानुमानैः प्रमीयते। तनुकरणादिजगत्कर्तृत्वादिना प्रमितश्चायमुपादाननिलीनसमस्तकार्यजननशक्तिमात्रयुक्ततया, कार्यजननाभिमुखशक्तियुक्ततया, जनितकार्यशक्तियुक्ततया च क्रमेण शक्त उद्युक्तः प्रवृत्तश्चेति त्रिविधो भवति । इयं च शक्तिरेकैव कार्यानुकूलादृष्टादिपरामर्शिनी ज्ञानं, एवंभवत्वित्याकारिका इच्छा, तत्तत्कार्यजननी कृतिरिति ज्ञानेच्छाकृतिस्वभावा। इयमेव मूर्धादिभावकल्पनया मननत्राणयोगेन च

मन्त्रपदवाच्याशिवशरीरमिति शैवसिद्धान्तः । शक्तिशक्तिमतोरभेदन्या-येनास्याः शिवस्वरूपाया न मुख्यं शरीरत्वम् ॥

**ईश्वरप्रभेदस्तस्य जगदुपादानत्वादिकं च ।**

अयं चेश्वरः सकलनिष्कलस्वरूपो नवविधः । सूर्यस्येव सन्निधि-रूपसङ्कल्पमात्रेण कर्तृत्वस्वीकारान्न निरूपाधिकस्यास्य विकारित्वप्रसङ्गः । सूर्योऽप्यविकार्येऽव कमलोत्पलनवनीतपङ्कसम्बन्धिषु विकासमुकुलीभाव-द्रवीकरणशोषणरूपकार्येषु सन्निधिमात्रेण कर्ता दृश्यते । एवमेव समस्तो-पाधिवर्जितः प्रवृत्ताशेषशक्तिकः शिव एव प्रथमसृष्टौ कर्ताऽभ्युपेय इति तस्यैव सृष्ट्यादिपञ्चविधकार्यकर्तृत्वमुपपद्यते । अनन्तेश्वरश्रीकण्ठा-दयश्च शिवशक्त्यैव विभिन्नाः पतिपदार्थ एवान्तर्भवन्ति । अयमीश्वरो जगतो निमित्तमुपादानं च । चेतनाचेतनात्मकस्य समस्तजगतः शिवा-दाविर्भावोक्त्या शिवस्यैवोपादानत्वम् । अत्र च मृद्घटयोरुपादानो-पादेयभावमूलकसामानाधिकरण्यनिर्देशवत् "भूतानि चाहं स्थिर-जङ्गमानि यावन्ति चान्यान्यहमेव तानि" इत्यादि सामानाधिकरण्य-निर्देशो गमकः । परमाण्वादीनामुपादानत्वमनुपपन्नम् । असमवायि-कारणप्रक्रिया च शब्दादिकार्ये व्यभिचारादागमविरोधाच्च नोपपद्यते । शिवस्य क्वाचित्कोपादानत्वनिषेधकवाक्यानि च मायावद्विकारितयोपादा-नत्वनिषेधपराणि । उपादानत्वप्रतिपादकवाक्यानि च सत्तालक्षणानु-स्यूतिस्फूर्तिपराणि । अतश्च माया विकारितया जगदुपादानं, शिवश्चा-विकारितयेति कार्ये प्रपञ्चे जडविकारादिरूपं सत्तास्फूर्तिप्रियादिरूप चोपपद्यते । शिवमायोभयोपादानस्यापि प्रपञ्चस्य आर्द्रेन्धनवह्न्युभयो-पादानधूमस्येन्धनमात्रधर्मकृष्णरूपमिव जडमायामात्रधर्मप्रकाश्यत्वादिक-मेव । न चिदानन्दरूपत्वम् । उभयविधमायाविशिष्टेश्वरस्य जगदुपा-दानत्वेऽपि विशेषणीभूतमायाया एव विकारित्वं, न केवलस्येत्य-

विकार्येवेश्वरः । जगच्च पटकुटीवदहिकुण्डलवच्च शिवाधिष्ठितशुद्धाशुद्धमाययोर्वृत्तिरूपं कार्यम् । न परिणामादिरूपम् । शिवस्य धर्म्यंशे स्वप्रकाशत्वं जगदुपादानत्वादिधर्मांशे प्रमाणगम्यत्वमित्यप्रमेयत्वमागमादिप्रमेयता चोपपद्यत इति स्पष्टीकृतम् ॥

## तृतीयपरिच्छेदप्रतिपाद्यम् ।

पशुरपि चिद्रूपः पत्युरनन्योऽस्वतन्त्रो देहेन्द्रियादिव्यतिरिक्तोऽनेको विभुरनादिमलावृतः कर्तेति तृतीयपरिच्छेदेन निरूपितः ॥

## देहादीनामनात्मत्वमात्मभेदादिकं च ।

अत्र देहेन्द्रियप्राणमनसामात्मत्वासम्भव उपपादितः। आत्मनः क्षणिकविज्ञानस्वरूपत्वं सयुक्तिकं निराकृतम् । आत्मनोऽणुपरिमाणवादं तत्तद्देहानुरूपपरिमाणवादं च युक्त्यैव निराकृत्य तस्य विभुत्वमपि समर्थितम् । बुद्धेरज्ञातृत्वमात्मन एव स्वपरप्रकाशकत्वं च स्पष्टीकृतम् । आत्मभेदं प्रसाध्य तस्य देहाद्यन्यत्वोपपादनपूर्वकं सर्वज्ञत्वस्य स्वाभाविकत्वं किञ्चिज्ज्ञत्वस्य चौपाधिकत्वमिति सयुक्तिकमुपपादितम् । साकारत्वनिराकारत्वकोट्युद्भावनेनात्मनः सम्भावितानुपपत्तिं प्रतिविधाय तस्य नानावस्थोपपादनपूर्वकं निराकारत्वं संस्थापितम् । ईश्वरस्याप्तकामत्वात्तनुकरणभुवनादेर्जडस्य चाभोक्तृत्वात्तदतिरिक्ततया जडप्रवर्तकत्वेन तदुपभोक्तृत्वेन चात्मसिद्धिरुपपादिता ॥

## चतुर्थपरिच्छेदप्रतिपाद्यम् ।

एवं पशुस्वरूपादिकं निरूप्य शिवानन्दाभिव्यक्तिविरोधितया पाशस्वरूपमभिहितं चतुर्थपरिच्छेदे ॥

## पाशभेदादिनिरूपणम् ।

पाशोऽयं आणवतिरोधायकशक्तिबिन्दुमायाकर्मरूपेण पञ्चधा विभिन्नः । अत्र तिरोधायकशक्तेश्चिद्रूपत्वेऽपि पाशानुग्राहकत्वेन

पाशमध्ये प्रवेश उक्तः। आणवमलस्त्वात्मनो दृक्क्रियां निरुणद्धि। विभोरात्मनोऽणुत्वापादनादाणवत्वमस्येत्याभिहितम्। आणवमलानुग्राहकतया तिरोधायकशक्तेः पाशत्वमुपपादितम्। बिन्दुश्च शुद्धशब्दस्य तादृशतत्त्वानां चोपादानम्। इयं च जडरूपा कुण्डलिन्यपरपर्याया भगवतः परिग्रहशक्तिः। अस्यामेव शिवस्य लयादिकं रुद्राणूनां बन्धो विमुक्तिश्चेत्युक्तम्। मायापि कलादिपृथिव्यन्तकार्यजातस्योपादानभूता जडा भगवतः परिग्रहशक्तिः। इयं चैका नित्या प्रलये कर्मणामाश्रयभूता व्यापिनी विचित्रकार्यजननाद्विचित्रशक्तिमती अनात्मदेहादावात्मभ्रमहेतुर्मोहिनी वस्त्वात्मकस्य जगतः कारणतया वस्तुरूपा च। कर्म च प्राणिनां सुखदुःखहेतुतया प्रसिद्धम्। इदं च मनोवाक्कायरूपकारणभेदात्त्रिविध भवति। अत्रेष्टदेवतानुसन्धानपरस्वापजिहीर्षादिरूपं मनोजन्यत्वान्मानसम्। मन्त्रजपपरापवादादिरूपं वाक्साध्यतया वाचिकम्। देवतार्चनागम्यागमनादिकं कायमूलकत्वात् कायिकम्। एवं त्रिविधमिदमाध्यात्मिकादिभेदेन पुनस्त्रिविधं भवति। अत्र चित्तप्रसादोद्वेगादिजन्यमाध्यात्मिकम्। चन्दनानुलेपनखड्गघातादिजन्यमाधिभौतिकम्। अभिमतानभिमतवर्षातपादिजन्यमाधिदैविकम्। पुनश्चेदं लौकिकवैदिकाध्यात्मिकाधिमार्गिकमन्त्रभेदेन पञ्चधा भिद्यते। तत्र वापीकूपनिर्माणाभक्ष्यभक्षणादिकं लौकिकम्। ज्योतिष्टोमादिकं वैदिकम्। वैराग्यादिजनितं चाध्यात्मिकम्। योगजं चाधिमार्गिकम्। विज्ञानं च मान्त्रम्। पञ्चविधमपीदं कर्म वैषयिकसुखदुःखादिहेतुत्वात् पाशो भवति॥

### कलादितत्त्वोत्पत्तिस्तत्र पक्षभेदश्च।

एतत्कर्माश्रयभूतमायायाः साक्षात् परम्परया वा कलादीन्येकत्रिंशत्तत्त्वानि जायन्ते। तत्र भोगेयत्तापरिच्छेदात्मकस्य कलनस्य हेतु-

तया कालो जायते । अयं च लवत्रुट्यादिप्रतीतिविशेष्यो मायायाः प्राथमिको विकारः । कलैव प्रथमविकार इति केचित् । अयं च क्षण-लवादावुपाध्यभावात् स्वभावतो भिन्न एव ॥

दिशां तत्त्वेष्वप्रवेशः ।

तन्त्रेऽस्मिन् प्रेरकभोगभोग्यकाण्डेषु दिशां नियमेनापेक्षाभावात्ता न तत्त्वान्तरत्वेन परिगणिताः । किन्तु ताः सूर्याद्युपाधिघटिताः साधारणाः प्रतिपत्त्रपेक्षया असाधारणा धर्माधर्मव्यवस्थार्थमङ्गीक्रियन्त एव ॥

नियतिः ।

कर्मफलयोः सुखदुःखयोः पुरुषसम्बन्धनियामकतया मायाया द्वितीयविकारभूतं नियतितत्त्वमङ्गीकृतम् ॥

कला ।

आत्मनो दर्शनक्रियाभिव्यञ्जकतया कलातत्त्वमाश्रीयते । इयं च जले शैवालस्येव मलस्याच्छादनशक्तिं नाशयति । तावतैव तादृशशक्ति-विशिष्टमलनाशक इत्युच्यते ॥

विद्या ।

कलोद्बलितचैतन्यानां पुरुषाणां विषयेषु प्रवर्तकतया विद्यातत्त्वं स्वीक्रियते ॥

रागः ।

विषयानुरञ्जकतया रागतत्त्वमभिहितम् ॥

पुरुषः ।

आत्मनः प्रकृतिभोक्तृत्वप्रयोजकतया पुरुषतत्त्वमाख्यातम् ॥

इन्द्रियाणि ।

इन्द्रियाणि च सात्त्विकराजसाहङ्कारयोरन्यतरस्मात् प्रभवन्ति । इमानि च ज्ञानेन्द्रियकर्मेन्द्रियभेदेन द्विविधानि । तत्र सात्त्विका-

हङ्काराज्ज्ञानेन्द्रियाणि भवन्ति । राजसाहङ्काराच्च कर्मेन्द्रियाणि । ज्ञानेन्द्रियाणि च श्रोत्रत्वक्चक्षूरसनघ्राणभेदेन पञ्च । इमानि च स्वस्वगोलकातिरिक्तान्येव शब्दाद्यर्थग्राहकाणि । कर्मेन्द्रियाणि च वाक्पाणिपादपायूपस्थाख्यानि पञ्च । एतैश्च वचनादानगमनोत्सर्गानन्दा जायन्ते । एतेषां स्वतो भोग्यत्वाभावेऽपि आलोचनादिद्वारा बुद्धौ विषयार्पकत्वेन विषयावच्छिन्नबुद्धिरूपभोग्यसम्पादकत्वेन भोग्यत्वमिति भोग्यकाण्डान्तर्भाव उपपन्नः ॥

### तन्मात्रम् ।

तामसाहङ्काराच्च तन्मात्रतत्त्वं भवति । इद च शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्रभेदेन पञ्चविधमवान्तरविभागशून्यं शब्दादिसामान्यमेव । एतेभ्यः पञ्चभूतान्युत्पद्यन्ते । तानि चाकाशवाय्वग्निजलपृथिव्याख्यानि उत्तरोत्तरं स्वस्वकारणगुणैः सह तत्तद्गुणविशिष्टानि । तत्र शब्दतन्मात्रारब्धमवकाशप्रदं आकाशम् । इदं शब्दमात्रगुणकम् । स्पर्शतन्मात्रारभ्यो वायुः । अयं स्वगुणेन कारणगुणेन च शब्दस्पर्शोभयवान् । रूपतन्मात्रारभ्यं तेजः । इदं स्वगुणेन कारणगुणाभ्यां च शब्दस्पर्शरूपत्रयाधिकरणम् । रसतन्मात्रोपादेयं जलम् । इदं स्वगुणेन करणगुणैश्च शब्दस्पर्शरूपरसचतुष्टयाधिकरणम् । गन्धतन्मात्रारभ्या पृथिवी । इयं स्वगुणेन कारणगुणैश्च शब्दस्पर्शरूपरसगन्धपञ्चकवती । एते च प्रकृत्यादयः पृथिव्यन्ताश्शुद्धभोग्यकाण्डशब्देनाभिधीयन्ते ॥

### शरीरभेदस्तदुपयोगश्च ।

एतैः कलाद्येकत्रिंशत्तत्त्वैरारब्धानि शरीराणि पुंसां सुखदुःखभोगसाधनानि । लोकान्तरगत्यागतिहेतुभूतं पुर्यष्टकाख्यं सूक्ष्मशरीरम् । तच्च तन्मात्रपञ्चकमनोबुद्ध्यहङ्कारात्मकम् ॥

## पञ्चमपरिच्छेदप्रतिपाद्यम् ।

तदेवमाणवादिकर्मान्तं पाशपञ्चकं सपरिकरं निरूप्य शिवदीक्षादिना तत्संस्पर्शाभावे शिवैक्येन शिवानन्दाभिव्यक्तिलक्षणा मुक्तिः पञ्चमपरिच्छेदे विशदीकृता । तदित्थम्—ब्राह्मणक्षत्रियवैश्यसच्छूद्रसवर्णाद्यनुलोमजातीयेषु यः कर्मसाम्यमलपरिपाकाभ्यां युज्यते स स्वनिपातितपरमेश्वरशक्तिः सञ्जातश्रेयोवेदनश्रद्धो दोषदर्शनाद्विषयेभ्ये विरज्यति । विरक्तश्च श्रेयोवेदनाय गुरुकुलमुपसृप्तस्तस्माद्गुरोर्भक्त्याद्यनुमितस्वाधिकारात्समयदीक्षामवाप्य शिवारामपरिपालनादीन् समयिधर्माननुष्ठाय पूर्वं मन्दतरतयावस्थितशक्तिनिपाते मन्दतामापन्ने शिवपूजागमाध्ययनादौ श्रद्धालुस्तादृशश्रद्धापरिपाकाभिज्ञाद्गुरोरागमाध्ययनशिवपूजाद्यधिकारभूतां विशेषदीक्षां लभते । ततो गुरूपदिष्टागमाध्ययनादावुत्पन्नश्रद्ध आगमोदितान् पुत्रकान् वैदिकांश्च नित्यादिधर्मानाचरन् पूर्वं मन्दतयावस्थिते शक्तिनिपाते तीव्रतामापन्ने तदातिपक्कमलतया प्रथममापातप्रतिपन्नानागमार्थान् पूर्वापराविरोधेन जिज्ञासमानस्तदभिज्ञाद्गुरोस्तत्त्वज्ञानप्रतिबन्धकसकलसञ्चितकर्मनिबर्हणीं निर्वाणदीक्षां प्रतिपद्य, स्वात्मनः किञ्चिज्ज्ञत्वादि मलादिकृतं, शिवैक्येन सर्वज्ञत्वादिकमेव स्वाभाविकमिति गुरूपदेशादवगम्य तमेवार्थं युक्तिभिः प्रतिष्ठाप्य निरन्तरं ध्यायंस्तत्परिपाकसहकृतगुरुकृपाभिव्यक्तस्वस्वरूपस्तस्मिन्नेव क्षणे मलेन विमुच्यते । एवं मलविमुक्तोऽपि प्रारब्धकर्मणा देहबन्धमनुभवन् निष्पन्नतत्त्वज्ञानतया तदुत्पादककर्मणोऽनपेक्षितत्वात् 'कदाचिदनुतिष्ठति, कदाचित्परित्यजति, कदाचिन्निविडमनुतिष्ठति । तथापि न तैर्लिप्यते । एवं प्रारब्धफलं सुखं दुःखं वा अनुभवन्नपि न तत्र सज्जते । न वा विषीदति । एवं स्थितः प्रारब्धभोगान्ते मलकर्मोभयाभावान्मायाया अपि देहादिद्वाराऽवन्धकतयैकीभूतः पत्या अलौकिकमद्भुतमवाग्गोचरमखण्डाकारं

सच्चिदात्मकं शिवानन्दं लभते । इयमेव मुक्त्यवस्था । सर्वमपीदं सविस्तरमुपपादितं मुक्तिपरिच्छेद इति नेह प्रतन्यते ॥

### एतद्ग्रन्थकृतो ग्रन्थान्तराणि ।

ग्रन्थकृतानेन रचिता अन्येऽपि कतिपयग्रन्था वाचकमहाशयानामवगमाय निम्नतो निर्दिश्यन्ते ॥

(१) **क्रियादीपिका**—इयं चेन्नपुर्यां (Madras) सम्मुद्र्य प्रकाशिता ॥

(२) **शैवसन्न्यासपद्धतिः**—इयं कुम्भकोणे सम्मुद्र्य प्रकाशितः ॥

(३) **शिवज्ञानबोधीयलघुटीका** । इयं काश्यां (Benaras) सम्मुद्र्य प्रकाशिता । इयमेव तञ्जापुरनिवासिश्रीयुतब्रह्मानन्दस्वामिविरचितद्राविडभाषानुवादेन सह तञ्जानगरे (Tanjore) सम्मुद्र्य प्रकाशिता ॥

(४) **शिवज्ञानबोधीयशिवाग्रभाष्यम्** । इदं कुम्भकोणे सम्मुद्र्य प्रकाशितम् । अस्य प्रथमसूत्रभागः शिवाग्रसङ्ग्रहभाष्यस्य श्रीशिवप्रकाशपण्डितविरचितद्रविडभाषानुवादेन सह चेन्नपुर्यां (Madras) सम्मुद्र्य प्रकाशितः ॥

(५) **सर्वज्ञानोत्तरागमस्य द्राविडभाषापरिवर्तनम्** ।

(६) **देवीकालोत्तरागमस्य द्राविडभाषापरिवर्तनम्** ।

(७) हरदत्ताचार्यकृत **श्रुतिसूक्तिमालिकाया द्राविडभाषापरिवर्तनम्** । त्रयमपीदं अमुद्रितमिति प्रतिभाति ॥

(८) अरुणनन्दिशिवाचार्यविरचितस्वपक्षपरपक्षयोः स्वमतपरमतप्रमाणदर्शनपूर्वकं **द्राविडभाषानुवादः** । शिवज्ञानसिद्धेर्विवरणेषु अद्यत्वे एतद्ग्रन्थकर्तुरेव विवरणमग्रे परिगण्यते । अत्र परपक्षस्य भाषानुवादोऽमुद्रितः ॥

(९) **शिवज्ञानसिद्धीयस्वपक्षभाषानुवादः**—अयं (A.D. 1888, 1889) तमक्रिस्ताब्दयोभागचतुष्टयात्मना प्रकाशितेषु मरैज्ञान-देशिक-ज्ञानप्रकाशक-शिवाग्रयोगि - निरम्बवळकियदेशिक - सुब्रह्मण्यदेशिकानां शिवज्ञानसिद्धीयस्वपक्षवादस्य द्राविडार्थानुवादेषु द्रष्टव्यः। एतेष्वर्थानुवादेषु शिवाग्रयोगिनोऽर्थानुवादो द्वितीयस्थाने गण्यते ॥

(१०) **शिवनेरिप्रकाशम्**—ग्रन्थोऽयं द्राविडभाषापद्यात्मको नन्दिशिवाग्रयोगिविरचितविवरणसाहितः। एष च शुवान्तनच्चियार् इत्याख्यायाः पकमलायाः कस्याश्चित्स्वशिष्यायाः प्रार्थनया विरचित इति ज्ञायते। अयमपि चेन्नपुर्यां सम्मुद्र्य प्रकाशितः। अस्य विवरणकर्ता नन्दिशिवाग्रयोग्यपि एतदाचार्यानुग्रहपात्रमेव। नन्दिशिवाग्रयोगी एतदाचार्येणैव स्वस्थानेऽभिषिक्तोऽर्कवनमध्यास्तेति ज्ञायते ॥

**एतद्ग्रन्थकृदनन्तराचार्यपरम्परा।**

एतदाचार्यपरम्परायामर्कवनमध्युषितवत्सु आचार्यप्रमुखेषु नन्दिशिवाग्रयोगिनोऽनन्तरः शिवक्कोळुन्दुदेशिकः, ततः शोक्कलिङ्गदेशिकः, ततश्चिदम्बरदेशिकः, ततो वैद्यलिङ्गदेशिकः, ततः षण्मुखदेशिकः, ततो नमश्शिवायदेशिकः, ततः सुब्रह्मण्यदेशिकः, ततोऽम्बलवाणदेशिकः, ततो माणिक्कवाचकदेशिकः, ततो मुत्तुक्कुमारदेशिकः। इदानीन्तनप्रमुखाचार्यस्तु श्रीश्रीमीनाक्षीसुन्दरदेशिकः ॥

**एतत्सजातीयग्रन्थः।**

शैवसिद्धान्तपरिभाषाख्यः [1] श्रीसूर्यभट्टविरचितः परिच्छेदषट्कोपेतः शैवागमसिद्धान्ततत्त्वबोधकः संस्कृतवाङ्मयः कश्चिद्ग्रन्थो (देवकोट्टै) देवसालपुरीशैवसङ्घात् A.D. 1926 तमक्रिस्ताब्दे कुम्भकोणे सम्मुद्र्य प्रकटीकृतो विजयते। अस्य सूर्यभट्टोपज्ञमेव द्राविडभाषा-

---

1 अस्य सूर्यशिवाचार्य इति द्रविडभाषायां व्यवहारः.

मयमकं विवरणमपि तत्सङ्घादेव A.D. 1928 तमक्रिस्ताब्दे सम्मुद्य प्रकटितं दृश्यते । अयं सूर्यभट्टः द्रविडदेशान्तर्गत (वळुवूर्) च्युतपुरीनिवासीत्येतदीयशैवसिद्धान्तपरिभाषास्थमङ्गलपद्येनावगम्यते । एतद्विरचितशैवसिद्धान्तपरिभाषायाः शिवाग्रयोगिज्ञानशिवाचार्यस्य शैव परिभाषायाश्च ग्रन्थतो भेदेऽप्यर्थतः प्रायेणैकरूपतैव ज्ञायते । सूर्यभट्टशिवाचार्यस्य शैवसिद्धान्तपरिभाषायां उपोद्धात-प्रमाण-पति-पशु-पाश विनियोगाख्यैः षड्भिः परिच्छेदैरभिधेयोऽभ्यधायि । शिवाग्रयोगिज्ञानशिवाचार्यस्य शैवपरिभाषायां क्रमेण प्रमाण-पति-पशु-पाश-मुक्तिप्रतिपादकैः पञ्चभिः परिच्छेदैर्विषयोऽभिहितः । ग्रन्थद्वयेऽप्यस्मिन् शैवागमसार एव सरलसरण्या सुगमतया विशदीकृतः ॥

## एतद्ग्रन्थभाषापरिवर्तनम् ।

एतत्परिभाषाया द्राविडवाङ्मयपरिवर्तनमेकमुपलभ्यते । तदधुनाप्यमुद्रितमित्येव ज्ञायते । अस्य रचयिताप्येतावदवध्यपरिचित ॥

## उपकारस्मरणम् ।

एवं संस्कृतद्राविडभाषयोर्ग्रन्थान् विरच्य शैवागमसाराननायासेन तज्जिज्ञासूनवबोध्य शैवसमयपरिपालननिरतोऽयमाचार्यः पशुपाशविमोचने बहूपकृतवान् ॥

## एतन्मुद्रणोपयुक्तकोशान्तराणि ।

अस्य ग्रन्थस्य शोधने सङ्गृहीतेषु आदर्शकोशेषु—

(१) (मै) संज्ञकः (No. 3315) एतद्विमर्शनसंस्थावस्थितो बहुत्र त्रुटितः ॥

(२) (अ) संज्ञकोऽसमग्रः (No. T. 6181) (Madras) चेन्नपुरीस्थाडयार्पुस्तकभाण्डारादानीतः ॥

(३) (दे) संज्ञको द्रविडदेशान्तर्गत (देवकोट्टै)देवसालपुरीस्थ-शैवसङ्घात्सङ्गृहीतः समग्रः प्रायेण शुद्धश्च ॥

### कोशदातृभिनन्दनम् ।

एतन्मुद्रणे आदर्शकोशवितरणेन साह्यं विहितवतामौदार्यमुपकारविधायितां चेयं विमर्शनसंस्था अनारतं मुदितहृदया अभिनन्दति ।

### उपसंहारः ।

एवमादर्शकोशसहायेन यथामति संशोध्य विषयसूच्यादिभिः परिष्कृत्य सम्मुद्र्य प्रकाशितोऽयं ग्रन्थो वाचकमहाशयनयनातिथीकृतो विजयतेतमाम् ।

इत्थं सुधीविधेयः,

विद्यालङ्कारः, तर्क-वेदान्त-मीमांसाविद्वान्,

**आर्. रामशास्त्री,**

महीशूरपुरीप्राच्यविद्याविमर्शनसंस्थापण्डितः.

ORIENTAL RESEARCH INSTITUTE, MYSORE.
*1-10-1947.*

# शैवपरिभाषोदाहृताकरग्रन्थसूची [1]



[1] अत्र नामग्राहमनिर्दिष्टा आकरग्रन्था यथालाभं सूचिताः.

## शैवपरिभाषास्थानुपलब्धाकरोदाहरणवाक्यानि.

| | | पुटम् | पङ्क्तिः |
|---|---|---|---|
| अखण्डिताहङ्कृतिना पराहङ्कारखण्डनम् । निग्रहस्तन्निमित्तस्य निग्रहस्थानतोच्यते ॥ | .... | 19 | 22 |
| अचेतनस्य मायादेः प्रवर्तकतया पतिः । सिद्धः सर्वार्थवित् कर्ता व्यापकः सततोदितः ॥ | ... | 31 | 11 |
| अत सातत्यगमने व्युत्पन्ना ज्ञस्वभावतः । परामर्शात्मकास्तेतो गतेर्ज्ञानार्थता यतः ॥ | | | |
| आत्मनो व्यापिनोऽनन्ताश्चिद्रूपाः पशवस्त्रिधा । | ... | 44 | 9 |
| अन्ये च ब्राह्मणा विष्णो राजानश्च तथैव च । वैश्याश्च तारतम्येन ज्ञानाभ्यासेऽधिकारिणः ॥ अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम् । अन्येषामपि सर्वेषां ज्ञानाभ्यासो विधीयते ॥ भाषान्तरेण कालेन तेषां सोऽप्युपकारकः । | .... | 133 | 17 |
| अभिधावैपरीत्येन कल्पितार्थस्य बाधनम् । | .. | 18 | 7 |
| अमद्यपास्तु ये शूद्राः शौचाचारक्रियादराः । शिवभक्ताश्च ये तेषां दीक्षा कार्यान्यथा न हि ॥ | ... | 134 | 7 |
| अयसाग्नेर्यथा योगो वियोगोऽग्नेर्यथायसा । तत्त्वानामात्मनश्चैवं शक्त्या कर्मवशाद्भवेत् ॥ | ... | 63 | 20 |
| अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्कता । अक्रोधो गुरुशुश्रूषा शौचं सन्तोष आर्जवम् ॥ | ... | 106 | 3 |
| आचार्यमूर्तिमास्थाय चतुर्धा शक्तिपाततः । भगवाननुगृह्णाति स एव सकलानपि ॥ | | | |
| आचार्यः शिव एवाहुः | ... | 135 | 13 |
| इत्थं समयदीक्षायां विशिष्टायां विशेषतः । वह्निहोमागमज्ञाने योग्यः सञ्जायते शिशुः ॥ | .... | 141 | 12 |
| उपचारप्रयोगेषु गौणलाक्षणिकेषु यः । मुख्यार्थासम्भवाद्बाध उपचारच्छलं तु तत् ॥ | .. | 18 | 22 |

# शैवपरिभाषाविषयसूची.

## प्रथमपरिच्छेदः

चतुर्थः परिच्छेदः

पञ्चमः परिच्छेदः

# शोधनपत्रम्

| अशुद्धः | शुद्धः | पृष्टम् | पङ्क्तिः |
|---|---|---|---|
| विषशाण | विशेषण | 8 | 22 |
| द्यावृ्त्तिः | द्यावृत्तिः | 12 | 4 |
| 1. सन् | 2. सन् | ,, | 24 |
| रासिद्धत्व | रसिद्धत्व | 14 | 14 |
| नस्तः | न स्तः | 16 | 21 |
| कृतिरत्य | कृतिरित्य | 20 | 17 |
| त्तत्वतीत | त्तत्वातीत | 22 | 17 |
| संपर्स्शे | संस्पर्शे | 23 | 16 |
| कषोह्य | कर्षौ ह्यै | 25 | 11 |
| हेतुवात् | हेतुत्वात् | 26 | 18 |
| चेष्टोव | चेष्टाव | 38 | 13 |
| पक्षत्वमेव ॥ अत एव | पक्षत्वमेव । अत एव | 39 | 12 |
| स्तऽतो | स्तेऽतो | 44 | 10 |
| वाय | वायु | 45 | 10 |
| योगे | योगो | 65 | 23 |
| ढ्यं | ह्यं | 68 | 6 |
| प्रलयकालेपु | प्रलयाक्लेपु | 69 | 8 |
| तदक्तुं | तदुक्तं | ,, | 10 |
| गूणात्मना | गुणात्मना | 70 | 15 |
| शक्तिः, सर्व | शक्तिः सर्व | 73 | 18 |
| पोक्षि | पेक्षि | 77 | 19 |
| कलादिपर्यन्तानि | कलादिप्रकृतिपर्यन्तानि | 103 | 13 |
| पढ्यते | पठ्यते | 107 | 19 |

| अशुद्धः | शुद्धः | पृष्टम् | पङ्क्तिः |
|---|---|---|---|
| क्ताह्य क | क्ता ह्यक | 108 | 10 |
| द्रणं | द्रुणं | 110 | 23 |
| भदतः | भेदतः | 112 | 20 |
| यद्मि | यद्भि | 122 | 21 |
| इत्यादि वच | इत्यादिवच्च | 134 | 15 |
| तत्त्व | तत्त्वे | 138 | 4 |
| भष्म | भस्म | 139 | 9 |
| नियभाद्दष्ट | नियमाद्दष्ट | 147 | 12 |
| दीक्षैवं | दीक्षैव | 149 | 9 |
| तयव | तयैव | 150 | 10 |

भूमिकादिशोधनम्

| अशुद्धः | शुद्धः | पृष्टम् | पङ्क्तिः |
|---|---|---|---|
| प्रकाशितः | प्रकाशिता | 22 | 8 |
| मयमकं | मयमेकं | 24 | 1 |
| ........ ॥ | एव ॥ | ,, | 14 |
| समवावि | समवायि | 37 | 27 |
| समु य | समुच्चय | 60 | 28 |

॥ श्रीः ॥

॥ श्री गुरुभ्यो नमः ॥

# शैवपरिभाषा

## प्रथमः परिच्छेदः

वन्दे तं परमेशानं सच्चिदानन्दलक्षणम् ।
सृष्ट्यादिपञ्चकृत्येशं पशूनां पतिमव्ययम् ॥
गणेशं षण्मुखं साम्बं चित्सभेशं [1] गुरुं नमन् ।
शिवभक्तानुमोदाय शैवभाषां वदाम्यहम् ॥

इह खलु धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थानां मध्ये मोक्षस्य परमपुरुषार्थत्वात्, तस्य च दीक्षादिना पाशापगमे पशौ शिवत्वाभिव्यक्तिरूपस्य पत्यनन्यतासाक्षात्कारेणैव प्राप्यत्वात्, तादृशसाक्षात्कारस्यापि पति-पशु-पाशाख्यपदार्थत्रयपरिज्ञानसाध्यत्वात्, तत्परिज्ञानस्य च प्रमाणाधीनत्वात्, प्रथममुद्देश-लक्षण-परीक्षाभिः प्रमाणं निरूप्यते ॥

तत्र नाम्ना पदार्थानां स्वरूपमात्रकीर्तनमुद्देशः । लक्षणमसाधारणो धर्मः । लक्षितस्य लक्षणमुपपद्यते न वेति विचारः परीक्षा ॥ तत्र प्रमाणानामुद्देशः 'प्रत्यक्षानुमानशब्दाः इति त्रीणि प्रमाणानि' इति ॥ तदुक्तं—"प्रत्यक्षमनुमानं च सह शब्देन शाङ्करे" इति ॥

---

[1] गुरून् (मै).

तत्र प्रमाणसामान्यलक्षणं तु संशयविपर्ययस्मृतिव्यतिरिक्ता प्रमापरपर्याया आत्मचिच्छक्तिरिति । तदुक्तं श्रीमत्पौष्करे—

संशयादिविनिर्मुक्ता चिच्छक्तिर्मानमुच्यते ॥ इति ॥

(पौ. प्र. प. श्लो. ४)

तत्र संशयो नाम साधारणधर्मदर्शनात्कोटिद्वयावलम्बिनी बुद्धिः, यथा—स्थाणुर्वा पुरुषो वेत्यादि । विपर्ययस्तु अतस्मिंस्तद्बुद्धिः, यथा—शुक्तिकायां रजतमित्यादि । पूर्वानुभवजनितसंस्कारजन्या बुद्धिः स्मृतिः, यथा—कामुकस्य कामिनीसाक्षात्कारादि । एतत्त्रितयव्यतिरिक्ता चिच्छक्तिरेव प्रमाणम् ॥

तदुक्तं तत्रैव—

द्व्यालम्बा संशयो बुद्धिः समानाकारदर्शनात् ।
विपर्ययोऽन्यथाज्ञानमतद्रूपप्रतिष्ठितम् ॥
अनुभूतार्थविषया मतिः स्मृतिरिहोच्यते ।
एभिर्विहीना चिच्छक्तिः प्रमाणत्वेन संमता ॥ इति ॥

(पौ. प्र. प. श्लो. ५–६)

इयं च चिच्छक्तिः पदार्थविषयको बोध एव । तस्याश्च फलं स्वविषये [1]हानोपादानादि । उक्तं च पौष्करे—

परं प्रमेय हानादिव्यापारः फलमिष्यते ॥ इति ॥

(पौ. प्र. प. श्लो. ८)

तत्रातिव्याप्त्यादिदोषा न सन्तीति तत्रैव प्रतिपादितम् ।

अत्राव्याप्त्यादिदोषाणां न कदाचन संभवः ।
प्रत्यक्षादिप्रमाणेषु व्याप्त्या नाव्याप्तिदूषणम् ॥

---

[1] भावादि—(मै).

नातिव्याप्तिश्च मेयेषु नानाभावेष्ववर्तनात् ।
नान्यथाव्याप्तिरप्यस्ति प्रमाणं चेत्तदीदृशम् ॥
प्रमाणकथनं तेन समीचीनमुदाहृतम् । इति ॥

(पौ. प्र. प. श्लो. ९–११)

तथागतास्तु प्रमाणमित्थं लक्षयन्ति—
" प्रमाणमविसंवादिज्ञानमर्थक्रियास्थितिः ।
अविसंवादनं " . . . . ॥ इति ॥

तदसत्; भूतभविष्यद्विषयेष्वनुमानेष्वव्याप्तेः। न ह्यसतोर्भूतभविष्यतोः काचिदर्थक्रियास्ति । स्मृतिज्ञानसविकल्पकज्ञानयोश्चातिव्याप्तेः । न हि ततः प्रवृत्तो विसंवाद्यते कश्चित् । न चेष्टापत्तिः । तेषां मते शुद्धवस्तुविषयकत्वेन निर्विकल्पस्यैव प्रमाणत्वात् ।

प्राभाकरास्तु—

अनुभूतिः प्रमाणं सा स्मृतेरन्या स्मृतिः पुनः ।
पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ॥

इति वर्णयन्ति । तदपि न; तत्र पूर्वं पदार्थस्मरणपूर्वकस्य वेदवाक्यार्थज्ञानस्य स्वतः प्रामाण्यं प्रसाध्येदानीं स्मृतिव्यवच्छेदेनानुभूतेः प्रमाणत्वं वदतस्तव पूर्वापरविरोधात् ॥ किं च स्मृतिज्ञानानामात्मस्वात्मांशयोरभिमतं प्रामाण्यं न सिध्येत् [1] स्मृतिज्ञानस्य स्मृतिव्यतिरिक्तत्वासम्भवेनानुभूतित्वाभावात् ॥

अनधिगततथाभूतार्थनिश्चायकं प्रमाणमिति भाट्टाः । यदाहुः

तस्माद्दृढं यदुत्पन्नं [2] न च संवादमृच्छति ।
ज्ञानान्तरेण विज्ञानं तत्प्रमाणं प्रतीयताम् ॥ इति ॥

(श्लो. वा. चो. सू. श्लो. ४०)

---

[1] स्मृतीना म्रा (दे.) [2] नापि (मै)

तदपि न चारुतरम्; यादृच्छिकसंवादिनां दुष्टेन्द्रियाणां बाष्पादिविषयधूमादिलिङ्गविभ्रमाणां भ्रान्तविप्रलम्भकवाक्यानां च प्रामाण्यापत्तेः, सकलवेदाप्रामाण्यप्रसङ्गाच्च। यत्र क्वचन जन्मनि वेदार्थस्य सर्वैरधिगतत्वेनानाधिगतपूर्वत्वाभावात्। किंचास्मिन्पक्षे धारावाहिकद्वितीयादिज्ञानानां प्रामाण्यं न स्यात्॥

नैयायिकास्तु — साधनाश्रययोरन्यतरत्त्वे सति प्रमाव्याप्तं प्रमाणमिति कथयन्ति। यथाहुः —

तत्र प्रमाणं प्रमया व्याप्तं प्रमितिसाधनम्।
प्रमाश्रयो वा तद्व्याप्तो यथार्थानुभवः प्रमा॥ इति॥

तदपि न; करणानां प्रमेयत्वेन प्रमाणत्वाभावात्, प्रामाण्ये [1]वा दीपादीनामपि तथात्वप्रसङ्गात्। तदुक्तं श्रीपौष्करे—

ननु [2]न स्यात्कुतो मानं यत्तत्प्रमितिसाधनम्।
[3]तत्र दीपदृगादीनां प्रमाणत्वप्रसङ्गतः।
यत्प्रमाणं न तन्मेयं मेयाभावः पुनः स्थितः॥
[4]मत्यानुमीयते तत्र शब्दादिर्विषयत्ववतः।
यन्मेयं न हि तन्मानं यतो मानेन मीयते॥
पश्यामीति दृशा लोके प्रसिद्धिरुपकारतः।
न कस्यापि पदार्थस्य यद्विना भवति प्रमा॥
तदेव मानमेष्टव्यं चक्षुरादि न तादृशम् इति॥

(पौ. प्र. प. श्लो. ११–१४)

चक्षुरादीन्द्रियाणां स्वस्वविषयव्यतिरिक्तविषयग्राहकत्वायोगात् सर्वग्राहकं किञ्चित्प्रमाणमेष्टव्यम्। तच्च चिच्छक्तिरेव। तदुक्तम्—

---

[1] सति (मै). [2] तस्याः (दे). [3] सत्त्व (दे). [4] मित्या (दे).

न चक्षुः शब्दसंवित्तौ न श्रोत्रं रूपवेदने ।
सर्वत्र [1]ग्राहिका संवित्सैव मानमतो मतम् ॥ इति ॥

(पौ. प्र. प. श्लो. १५)

ननु तर्हि सर्वेषां पदार्थानां [2]सिद्ध्यसिद्ध्योर्बुद्ध्यन्वयव्यतिरेकानुविधायित्वात्, तस्याश्च सर्वविषयग्राहकत्वात् बुद्धिरेवात्र प्रमाणमिति चेत्, न; तस्याश्चक्षुरादिवत्प्राकृतत्वाविशेषेण चिद्रूपत्वाभावात्, सुखदुःखादिरूपहेतुना तस्या वेद्यत्वाच्च । तस्माद्बुद्धेर्नियमेन प्रमाणत्वं नास्ति । उक्तञ्च

यत्सिद्धौ च इय सिद्धा यदसिद्धौ न किंचन ।
बुद्धिः सर्वान्तिमत्वेन कस्मान्मानं न चेष्यते ॥
प्राकृतत्वाविशेषेण दृगादेरविशेषतः ।
असंविदात्मकत्वेन न हि बुद्धेः प्रमाणता ॥
बुद्धिश्च वेद्यते किंच सुखदुःखादिरूपतः ।
प्रमाणैकान्तता तेन बुद्धेरपि न संमता ॥ इति ॥

(पौ. प्र. प. श्लो. १६–१९)

ननु प्रमात्रादिप्रमेयान्तसामग्र्यां सत्यामेव प्रमोत्पत्तेः असत्यां च तदनुत्पत्तेः प्रमासामग्र्येव प्रमाणमिति चेत् न; तथात्वे प्रमातृप्रमेयादिव्यवहारोच्छेदप्रसङ्गात्, प्रमात्रादिव्यतिरेकेण सामग्र्यभावात्, यद्यतो व्यतिरिक्तं तत्ततो भिन्नमिति व्याप्तिव्याकोपाच्च । तस्मात् संशयादिविनिर्मुक्ता चिच्छक्तिरेव प्रमाणमिति सिद्धम् । तथा चोक्तम्—

ननु प्रमेयसंसिद्धौ सामग्री केन नेष्यते ।
प्रमात्रादिघटान्तेषु सत्स्वेव घटनिश्चयात् ॥

---

[1] ग्राहिणी (दे). [2] विध्यविध्योर्बु (अ).

[1] तन्न प्रमातृमेयादिव्यवहारविलोपतः ।
मातृमेयप्रमाणानां तदन्तर्भावत. स्थितेः ॥
तेषां तु व्यतिरेकेण सामग्री न च दृश्यते ।
यद्यतो व्यतिरिक्तं तत्ततो [2] भिन्नं स्वरूपतः ॥
संशयादि[3]विभिन्ना तु चिच्छक्तिर्मानमिष्यताम् ॥

(पौ. प्र. प. श्लो. १९–२२) इति ॥

**नन्वात्मचिच्छक्तिः प्रमाणं चेत्त्वन्मतेऽपि[4] चैकस्यैव प्रमाणत्वप्रमातृत्वप्रसङ्गरूपदोषोऽस्तीति चेत्, न; अविद्यारागादिना कलुषिता विषयाभिमुखी चिच्छक्तिः प्रमाणमेव, न प्रमाता। अक[5]लुषिता आत्माभिमुखी चिच्छक्तिः प्रमातैव, न प्रमाणम् । तदुक्तं तत्रैव—**

चिच्छक्तिश्च परापेक्षो बोध एव न चापरः ।
न तस्याभिमुखं ज्ञानं माता मानं परोन्मुखम् ॥ इति ॥

(पौ. प्र. प. श्लो. ७)

**तत्र प्रथमं प्रत्यक्षलक्षणमुच्यते । साक्षात्कारिप्रमा प्रत्यक्षम् । तच्च द्विविधम्, निर्विकल्पकसविकल्पकभेदात्। निर्विकल्पकं नामजात्यादियोजनाहीनं वस्तुमात्रावगाहि ज्ञानम् । सविकल्पकं तु नामजात्यादियोजनात्मकं विशिष्टज्ञानम् । उक्तं च तत्रैव—**

विकल्पयोगात्सा शक्तिरेकापि द्विवि[6]धोच्यते ।
वस्तुस्वरूपमात्रस्य ग्रहणं निर्विकल्पकम् ॥
नामजात्यादिसंबन्धसहितं सविकल्पकम् । इति ॥

(पौ. प्र. प. श्लो. २७–२८)

**तच्च प्रत्यक्षं प्रकारान्तरेण त्रिविधम्, इन्द्रियप्रत्यक्षं, मानसप्रत्यक्षं, इन्द्रियान्तःकरणनिरपेक्षचित्प्रत्यक्षं चेति । तदुक्तम्—**

---

1 मतत् (मै). 2 भिन्नस्वरूपवत्. (अ). 3 विहीना (मै). 4 तेऽपि प्र (दे)
5 छुषीकृता (मै). 6 वेष्यते (दे).

प्रत्यक्षं त्रिविधं प्रोक्तमक्षमानसचिद्वशात् ॥ इति ॥

**पौष्करे च—**

एतच्चेन्द्रियसापेक्षं निरपेक्षं तथैव च ।

अन्तःकरणसापेक्षमिति त्रिविधमिष्यते ॥ इति ॥

(पौ. प्र. प. श्लो. २८)

**तत्रेन्द्रियान्तःकरणनिरपेक्षं निरस्तबन्धया चिच्छक्त्या आत्मनो नित्यसंबन्धाज्जायमानं स्वात्मापरोक्षज्ञानम्। तदुक्तम्—**

तत्रेन्द्रियानपेक्षं च [1] सर्वथा त्यक्तबन्धया ।

चिच्छक्त्यानन्त्ययोगाच्च [2] योगः स्वाभाविको मतः ॥ इति ॥

(पौ. प्र. प. श्लो. २९)

**अन्तःकरणसापेक्षं तु मनसा बाह्येन्द्रियोपनीतार्थानुभवः । तदुक्तं तत्रैव—**

अन्तःकरणसापेक्षं बाह्येन्द्रियचयेन तु ।

अन्तःकरणसापेक्षं चिच्छक्तेर्ध्येयसङ्गतिः ॥ इति ॥

(पौ. प्र. प. श्लो. ३१)

**इन्द्रियसापेक्षमपि आच्छादकमलनिवृत्तये इन्द्रियापेक्षया चिच्छक्त्येन्द्रियद्वारार्थवीक्षणम् । तदपि तत्रैव--**

अन्यच्चेन्द्रियसापेक्षं स्याच्छादननिवृत्तये ।

इन्द्रियापेक्षया शक्त्या तद्द्वारेणार्थवीक्षणम् ॥ इति ॥

(पौ. प्र. प. श्लो. ३०)

**ननु चिच्छक्तेरिन्द्रियद्वारार्थसंबन्धः प्रत्यक्षमित्युक्तम् , तस्याः स्वनिष्ठाया विषयाभिमुख्याभावात् किंचित्करणं विना तस्या अर्थसंबन्धः कथमिति चेत् , सत्यम् ; मलावरणवशात्स्वनिष्ठापि सा कलया**

---

[1] सर्वदा–(अ). [2] ज्ञाप्यः–(मै).

व्यञ्जिता अविद्यया विषयाभिमुखीकृता रागेण रञ्जिता च सती अन्तः-करणबाह्येन्द्रियद्वारा आत्मभोगाय बाह्यार्थे प्रवर्तते ।

न तु परोक्तरीत्या इन्द्रियार्थसन्निकर्षमात्रजन्यज्ञानं प्रत्यक्षम्; चिच्छक्तिसंयोगविहीनस्य तस्याकिंचित्करत्वात् । तदुक्तम्—

चिच्छक्तेरर्थसंयोगोऽध्यक्षमिन्द्रियमार्गतः ।
स्वयमेव हि चिच्छक्तिः पदार्थाभिमुखी न तु ॥
कथं पदार्थसंबन्धस्तस्याः करणमन्तरा ।
सत्यं मलावृतत्वेन स्वनिष्ठैव प्रतिष्ठिता ॥
[1] कलादिकरणैर्युक्ता युज्यतेऽर्थैर्यदा क्वचित् ।
तदा प्रत्यक्षमित्युक्तमक्षमर्थे प्रवर्तते ॥
न चेन्द्रियार्थमात्रस्य संयोगोऽध्यक्षमिष्यते ।
चित्संयोगविहीनानामकिंचित्करता यतः ॥ इति ॥

(पौ. प्र. प. श्लो. २३-२६)

स्वायंभुवे च—

कलोद्दलितचैतन्योऽविद्यादर्शितगोचरः ।
रागेण रञ्जितश्चापि बुद्ध्यादिकरणैर्युतः ॥ इति ॥

तत्राक्षसंबन्धः षड्विधः, संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति । [2] तदुक्तं पौष्करे—

अक्षमात्रेण संबन्धः षड्विधोऽध्यक्षसंज्ञितः ॥

---

[1] कालादिकरणव्यक्तया-(अ. दे.) [2] तत्र चक्षुषा घटस्य ग्रहणे संयोगः संबन्धः घटरूपस्य ग्रहणे संयुक्तसमवायः । रूपत्वस्य ग्रहणे संयुक्तसमवेतसमाय. । श्रोत्रेण शब्द ग्रहणे समवायः । शब्दत्वस्य ग्रहणे समवेतसमवायः । अभावस्य ग्रहणे विशेषणविशेष्यभाव एवं षड्भिः संबन्धैः षड्विधं प्रत्यक्षं जायते ! (अयमंशोऽस्या द्राविडपरिवर्तनात्संगृहीतः

घटादिद्रव्यविज्ञानं चक्षुस्संयोगमात्रतः ।
संयुक्तसमवायात्तद्गुणसामान्ययोर्मतिः ॥
संयुक्तसमवेतार्थसमवायाद्गुणत्वधीः ।
शब्दस्य ग्रहणं श्रोत्रसमवेततया स्थितम् ॥
शब्दत्वं समवेतार्थसमवायात्प्रतीयते ।
विशेषणतयाभावसमवायाविति स्थितिः ॥
विशेष्यत्वेन वाभावसमवायमतिः स्थिता । इति ॥

(पौ. प्र. प. श्लो. ३२-३६)

अन्यत्रापि—

घटतन्नीलनीलत्वशब्दशब्दत्वजातयः ।
अभावसमवायौ च ग्राह्याः संबन्धषट्कतः ॥ इति ॥

इति प्रत्यक्षप्रमाणम् ॥

अथानुमानं निरूप्यते । व्याप्तिनिश्चयेन परोक्षार्थप्रमितिरनुमानम् । शब्दज्ञानव्यावृत्तये व्याप्तिनिश्चयेनेति पदम् । संशयोत्तरप्रत्यक्षेऽतिव्याप्तिवारणाय परोक्षग्रहणम् । अत्रानुमितिरनुमानमिति भावव्युत्पत्त्या व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यपरोक्षार्थविषयकबुद्धिवृत्त्यवच्छिन्नचिच्छक्तेरेवानुमानत्वम् । तत्करणस्य लिङ्गपरामर्शस्य तु मेयत्वेन नानुमानत्वम् । उक्तं च —

अनुमानं दृढव्याप्त्या परोक्षार्थावबोधकम् ॥ इति ॥

(पौ. प्र. प. श्लो. ३७)

तत्र व्याप्तिर्नाम साध्यसाधनयोरनौपाधिकः सम्बन्धः । तथा चोक्तम्—

साधनस्य स्वतः साध्येनान्वयो व्याप्तिरुच्यते ॥ इति ॥

(पौ. प्र. प. श्लो. ४१)

उपाधिश्च साधनाव्यापकत्वे सति साध्यव्यापकत्वम् । यथा वह्निना धूमे साध्ये आर्द्रेन्धनसंयोगादिः । स हि साध्यस्य धूमस्य व्यापकः, धूमवति सर्वत्र वृत्तेः । साधनस्य वह्नेरव्यापकः, वह्निमत्य-योगोलकादाववृत्तेः । अयं च निश्चितोपाधिः । शङ्कितोपाधिस्तु मित्रातनयत्वेन श्यामत्वे साध्येऽदृष्टोपाधिः । इयं च व्याप्तिर्द्विविधा, अन्वयव्यतिरेकभेदात् । सामान्यतः साध्यसाधनयोः संबन्धोऽन्वय-व्याप्तिः, यत्र धूमस्तत्राग्निर्यथा महानस इति । तयोर्व्यतिरेकमुखेन संबन्धो व्यतिरेकव्याप्तिः, यथा—यत्राग्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाहृद इति । तदुक्तं तत्रैव—

सा च व्याप्तिर्द्विधा ज्ञेया व्यतिरेकान्वयात्मिका ॥
[1] सामान्यमुखतो ज्ञेया [2] सान्वयव्याप्तिरुच्यते ।
साध्यसाधनयोर्व्याप्तिरभावमुखतोऽपरा ॥ इति ॥

(पौ. प्र. प. श्लो. ४१–४२)

अन्यत्र च—

व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥ इति ॥

इदं चानुमानं द्विविधम्, स्वार्थं परार्थं चेति । स्वार्थं स्वप्रतिपत्ति-हेतुः । तच्च महानसादौ वह्निधूमयोः व्याप्तिग्रहणानन्तरं पर्वतादौ व्याप्य-लिङ्गदर्शनाद्वह्न्याद्यनुमानम् । यत्तु स्वयं धूमादग्निमनुमाय परं बोधयितुं पञ्चावयववाक्यं प्रयुङ्क्ते तत्परार्थानुमानम् । ते चावयवाः प्रतिज्ञाहेतूदाहरणोपनयनिगमनभेदात्पञ्च । तत्र पर्वतोऽग्निमानिति-प्रतिज्ञा, धूमवत्त्वादिति हेतुः । यो यो धूमवान् सोऽग्निमान् यथा महानस इत्युदाहरणम् । तथा धूमवांश्चायमित्युपनयः । तस्माद्वह्नि-

---

[1] साधर्म्यमुखतो–(अ). [2] अन्वाय–(दे).

मानेवेति निगमनम् । एवं पञ्चरूपोपन्नाद्वाक्यात्परोऽप्यग्निं प्रतिपद्यते। तत्परार्थानुमानम्। तथा चोक्तं श्रीमत्पौष्करे—

तच्चेह पञ्चावयवं प्रतिज्ञा हेतुरेव च ॥
दृष्टान्तोपनयावेतौ निगमश्चाथ पञ्चमः ।
इष्टार्थोक्तिः प्रतिज्ञा तु हेतुस्तद्व्याप्तिमद्वचः ॥
दृष्टान्तो द्विविधो युक्तो हेतुस्तद्रूपरीक्ष्यते ।
दृष्टान्तपक्षयोर्व्याप्तिप्रस्तार उपनयो भवेत् ॥
पुनः प्रतिज्ञानियमो निगमः स्यात्सहेतुकः । इति ॥

(पौ. प्र. प. श्लो. ३

स च हेतुर्द्विविधः, दृष्टसाधनसामान्यतोदृष्ट तत्र आद्यस्त्वक्षयोग्यपदार्थानुमापकः। यथा—कुला कुत्रचित् दृष्ट्वा अन्यत्रापि घटदर्शनात् कुलालेन निर्मि द्वितीयस्तु प्रत्यक्षायोग्यार्थानुमापकः। यथा—परकी परवाक्यम्। तत्र हि साध्यं परकीयज्ञानं न प्रत्यक्षयो साध्यतावच्छेदकज्ञानत्वावच्छिन्नम्। तज्जातीयमात्मी योग्यम्। अतः सामान्यतोदृष्टमेव। तथा प्रपञ्चवृ चैकत्र दृष्ट्वा कार्यत्वसामान्यात् पशुपाशज्ञानागोचरज सामान्यतोदृष्टसाधनम्। एवं पशुपाशमायाकर्मादीनामप्यृ

दृष्टं सामान्यतोदृष्टमिति तत्साधनं द्विधा ।
तत्राद्यमक्षयोग्यस्य पदार्थस्यानुमापकम् ॥
अन्यत्सतोऽप्यदृष्टस्य पदार्थस्यानुमापकम् इति ।

(पौ. प्र. प. श्लो.

यत्र साध्यं वा साध्यजातीयं वा न प्रत्यक्षयोग्यं ज्ञातसाध्यकः परोऽपि हेतुः। यथा पूर्वपुण्यानुमाप

भोगविशेषः। स च साध्यः पुण्यादिः शब्दादृते न [1] ज्ञायत इति शब्द-मात्रज्ञातः। स च हेतुः पुनस्त्रिविधः, अन्वयव्यतिरेकि-केवलान्वयि-केवल व्यतिरेकिभेदात्। तत्र अन्वयव्यतिरेकी हेतुः पञ्चरूपोपन्नः, तानि च रूपाणि पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद्व्यावृत्तिः, अबाधित-विषयत्वं, असत्प्रतिपक्षत्वं चेति। तत्र सन्दिग्धसाध्यधर्मा पक्षः। निश्चितसाध्यवान् सपक्षः। निश्चितसाध्यधर्माभाववान्विपक्षः। तत्र पक्षधर्मत्वं हेतोः पक्षे पर्वतादौ वर्तनम्। सपक्षे सत्त्वं तु सपक्षे महानसादौ वर्तनम्। विपक्षाद्व्यावृत्तिः विपक्षे महाह्रदादौ हेतोरवर्त-नम्। अबाधितविषयत्वं पक्षे पर्वतादौ वन्ह्यादेः साध्यस्य प्रमाणा-न्तरेण बाधविरहः। असत्प्रतिपक्षत्वं तु साध्यविपरीतसाध्यसाधक हेत्वन्तरविरहः। एवं पञ्चरूपोपपन्न एवान्वयव्यतिरेकी साध्यसाधकः। विपक्षशून्यः केवलान्वयी। सपक्षशून्यः केवलव्यतिरेकी। तावुभौ चतूरूपोपपन्नावेव स्वसाध्यं साधयतः। क्रमेणैषामुदाहरणम्—पर्वतो वह्निमान् धूमवत्वात्, यथा महानसः। विश्वं कार्यं कर्तृसापेक्षं, कार्य-त्वात्, कुलालसापेक्षमृद्वत्। सर्वं कार्यं सदेव, क्रियमाणत्वात्, यन्नैवं तन्नैवं यथा शशशृङ्गमिति॥

तथा चोक्तम्—

अन्वयव्यतिरेकीति केवलव्यतिरेकि च।
केवलान्वयिरूपेण क्रमेण परिलक्ष्यते॥
पक्षधर्मः सपक्षे [2] सन् व्यावृत्तश्च विपक्षतः।
अबाधोऽसत्प्रतीपक्षो व्यतिरेकोन्वयात्मकः॥
साध्यधर्मयुतः पक्षः सपक्षस्तत्सधर्मयुक्।
तद्विधर्मा विपक्षः स्यात् बाधो मानान्तरोद्भवः॥

---

[1] समवनीति–मै. [1] सन् व्यावृत्तिश्च–मै.

साध्यद्वये त्रिरूपत्वं सपक्षस्य विपक्षता।
निर्विपक्षोऽन्वयी हेतुर्निस्सपक्षस्तथापरः॥
साग्निर्देशः सधूमत्वादन्यो रसवती यथा।
केनाप्यध्यासितं विश्वं कार्यं स्याद्वस्तुभावतः॥
यथा कुलालसापेक्षा मृदित्येषोऽन्वयी पुनः।
सदेवोत्पद्यते कार्यं क्रियमाणत्वहेतुतः॥
असन्न पूर्वं क्रियते धर्मांशः शशशृङ्गवत्। इति॥
(पौ. प्र. प. श्लो. ४४–५०)

उक्तानां पक्षधर्मत्वादिरूपाणां मध्ये एकेनापि रूपेण हीना **अहेतवः** कतिपयरूपयोगाद्धेतुवदवभासमाना हेत्वाभासाः। ते चासिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टभेदात्पञ्च। तत्रा-**सिद्धलक्षणम्**—

व्याप्यस्य पक्षधर्मत्वप्रतीतिः सिद्धिरुच्यते।
असिद्धिस्तदभावः स्याद्धेतुस्तद्वाननेकधा॥ इति॥

**स** च स्वरूपासिद्धो भागासिद्ध आश्रयासिद्धो विशेषणासिद्धो विशेष्यासिद्ध उभयासिद्धो हेत्वज्ञानासिद्धोऽधिकरणाज्ञानासिद्धोऽन्यतरासिद्धो व्याप्यत्वासिद्ध इति दशविधः। व्याप्यत्वासिद्धोऽपि द्विविधः। एको व्याप्तिग्राहकप्रमाणाभावात्, अपरस्तूपाधिसद्भावात्। अत आहत्यैकादशासिद्धाः। तत्र स्वरूपासिद्धो यथा—घटादयः **परमाणुरूपा** भवितुमर्हन्ति, नित्यत्वात्, पाञ्चरात्रमते आत्मवदिति। अत्र उभयवादिसंमते अनित्यघटे नित्यत्वहेतुः स्वरूपेणासिद्धः। **यथा** वा– नित्यः शब्दः, चाक्षुषत्वादिति। अत्र चाक्षुषत्वं शब्दे पक्षेऽसिद्धम्। भागासिद्धो यथा—अनित्यौ जीवदेहौ, कार्यत्वात् घटवदिति। अत्र कार्यत्वं पक्षीकृतयोर्जीवदेहयोर्मध्ये जीवेऽसिद्धम्।

आश्रयासिद्धो यथा—गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवदिति। अत्र गगनारविन्दाश्रयो न संभवति। विशेषणासिद्धो यथा—शब्दो नित्यश्चाक्षुषत्वे सति गुणत्वात्, रूपवदिति। अत्र हेतौ चाक्षुषत्वविशेषणमसिद्धम्॥ विशेष्यासिद्धो यथा—शब्दो नित्यः, प्रमेयत्वे सति द्रव्यत्वात्, घटवदिति। अत्र हेतौ विशेष्यभूतस्य द्रव्यत्वस्यासिद्धिः। उभयासिद्धो यथा—नित्यो घटः, गुणत्वे सत्यतीन्द्रियत्वादिति। अत्र हेतौ विशेषणभूतं गुणत्वं विशेष्यभूतमतीन्द्रियत्वमप्यसिद्धम्। हेत्वज्ञानासिद्धो यथा-देवदत्तो बहुधनः, तद्धेतुभूतादृष्टाश्रयत्वात्, यज्ञदत्तवदिति। अत्रादृष्टाश्रयत्वहेतुरस्माभिरदृष्ट इत्यज्ञानाद्धेतुरज्ञानासिद्धः। अधिकरणाज्ञानासिद्धो यथा—इदानीमिहाकाशे परमाणुः कदाचित् द्रव्यारम्भकः, परमाणुत्वात्, घटारम्भक परमाणुवदिति। अत्राश्रयस्य अकाशाधिकरणकपरमाणोरज्ञानादाश्रयाज्ञानासिद्धो हेतुः। अन्यतरासिद्धो यथा—अनित्यः शब्दः, कृतकत्वात्, घटवदिति। अत्रान्यतरस्मिन्मीमांसकमते कृतकत्वस्य हेतोरासिद्धत्वादयमन्यतरासिद्धो हेतुः। व्याप्यत्वासिद्धो यथा—सर्वं क्षणिकं, सत्वात्, जलबुद्बुदवदिति। अत्र सत्वक्षणिकत्वयोर्व्याप्तिग्राहकप्रमाणाभावादयमाद्यो व्याप्यत्वासिद्धो हेतुः। औपाधिकव्याप्यत्वासिद्धो यथा—गर्भस्थः श्यामः, मित्रातनयत्वात्, प्राचीनमित्रातनयवदिति। अत्र श्यामत्वे साध्ये [1]शाकाद्याहारपरिणतिभेदस्यैवोपाधेर्विद्यमानत्वादौपाधिकव्याप्यत्वासिद्धोऽयं हेतुः।

अथ विरुद्धः। तल्लक्षणं तु साध्यविपर्ययव्याप्तत्वम्, साधनविपर्ययव्याप्तसाध्यकत्वं वा। यथा—नित्यः शब्दः कार्यत्वात्, व्योमवदिति। अत्र कार्यत्वहेतुः स्वसाध्यविरुद्धेनानित्यत्वेन

---

[1] विरुद्धाहार (मै).

व्याप्तः। साधनविपर्ययव्याप्तसाध्यकस्तु यथा—अनित्यं मनः, चेतनत्वात्, आत्मवदिति। अत्रानित्यत्वरूपं साध्यं स्वसाधनाविपर्ययेणाचेतनत्वेन व्याप्तम्।

अनैकान्तिकः सव्यभिचारो हेतुः। स च द्विविधः। साधारणानैकान्तिकोऽसाधारणानैकान्तिकश्चेति। तत्र प्रथमो यथा—आत्मा नित्यः, प्रमेयत्वादिति। अत्र प्रमेयत्वहेतुः पक्ष आत्मनि सपक्षे मायायां विपक्षे घटादौ च वर्तते। द्वितियो यथा—भूर्नित्या, गन्धवत्त्वादिति। अत्र गन्धवत्त्वहेतुः सपक्षादात्मनः विपक्षाज्जलादेश्च व्यावृत्तः पक्षमात्रे वर्तते।

साध्यानिश्चायको हेतुरनध्यवसितः। यथा—विश्वं सन्ततं वर्तते, वस्तुत्वादिति। अत्र वस्तुत्वहेतुः स्वसाध्यनित्यवर्तनं न निश्चिनोतीत्यनध्यवसितः। बलवत्प्रमाणान्तरबाधितो हेतुः कालातीतः। स एव बाधितविषय इत्युच्यते। स प्रमाणानां भेदात्पञ्चधा भवति। तत्र प्रत्यक्षबाधो यथा—अग्निरनुष्णः, पदार्थत्वादिति। अनुमानबाधो यथा—विश्वं कार्यं निरुपादानकं, आगन्तुकत्वादिति। आगमबाधो यथा—यागादयः स्वर्गसाधका न भवन्ति, क्रियात्वात्, [1]व्यर्थक्रियावदिति। अर्थापत्तिबाधो यथा—शतवर्षजीवी देवदत्तो गृहेऽसन् बहिरपि नास्ति, प्रत्यक्षेणानुपलभ्यमानत्वादिति। तथाचोक्तं श्रीमत्पौष्करे—

हेतूनां दूषणान्यत्र पञ्चोक्तानि शिवागमे।
असिद्धिः प्रथमो हेतोः पक्षवृत्तेरनिश्चये॥
नित्यत्वादणवो हेतुरित्यसिद्धिः स्वरूपतः।
विशेषणविशेष्यादेरसिध्या स्यात्तदात्मिका॥

---

[1] क्रीडा (मै).

वर्तमानो विरुद्धः स्याद्धेतुः पक्षविपक्षयोः ।
व्यापकोऽव्यापको देशानवच्छिन्नस्त्वहेतुतः ॥

पक्षादित्रितये वर्तमानोऽनैकान्तिको भवेत् ।
आत्मा नित्यः प्रमेयत्वादित्यत्रोदाहृतो द्विजाः ॥

साध्याप्रयोजकः पक्ष एवानध्यवसायतः ।
सन्तत्या वर्तते विश्वं वस्तुत्वादित्युदाहृतः ॥

कालातीतस्तु साध्यस्य पक्षे मानविरोधतः ।
निरुपादानकं विश्वं कार्यमागन्तुकत्वतः ॥ इति ॥

(पौ. प्र. प. श्लो. ५१–५६)

ये त्वनध्यवसितमनैकान्तिकेऽन्तर्भावयन्ति ते प्रकरणसमं पञ्चमं मन्यन्ते । तल्लक्षणं तु यस्य साध्याभावसाधकः समानबलो हेतुरस्ति स सत्प्रतिपक्षः प्रकरणसम इति चोच्यते, यथा—शब्दो नित्यः, बाधकप्रमाणरहितत्वात् । स चानित्यः, साधकप्रमाणरहितत्वादिति । तथा चोक्तं श्रीमत्पौष्करे—"अबाधोऽसत्प्रतिपक्षः" इति । असत्प्रतिपक्षत्वं हेतोर्गुणं ब्रुवता सत्प्रतिपक्षस्य हेत्वाभासत्वं शिवेनैव सूचितम् । पक्षाभासश्चतुर्विधः, कुत्रचित्पक्षाभावात्, कुत्रचित्पक्षधर्मत्वाभावात्, कुत्राचित्पक्षपक्षधर्मत्वयोरुभयोरभावात् । कुत्रचिदुभयोः सत्त्वेऽपि व्याप्त्यभावादिति ॥

अत्र क्रमेणोदाहरणानि—खपुष्पं सुरभि, पुष्पत्वादिति । अत्र पक्ष एव नास्ति । अनित्य आत्मा, अणुरूपत्वादिति । अत्राणुरूपत्वे पक्षधर्मता नास्ति । शशशृङ्गं सुगन्धि, पार्थिवत्वादिति । अत्र पक्षः पक्षधर्मता चोभावपि नस्तः । पृथ्वी नित्या, चाक्षुषत्वादिति । अत्र पक्षपक्षधर्मत्वयोः सत्त्वेऽपि साध्यसाधनयोर्व्याप्तिर्नास्ति ।

एते च पक्षाभासा आश्रयासिद्धस्वरूपासिद्धव्याप्यत्वासिद्धेष्वन्तर्भवन्तीति नेह पृथग्लक्षिताः। दृष्टान्ताभासास्तु—अर्थदोषादुक्तिदोषाच्च द्विविधाः। तत्रार्थदोषः साधर्म्यदृष्टान्तस्य साध्यवैकल्यं साधनवैकल्यमुभयवैकल्यं स्वरूपवैकल्यं चेति चतुर्विधः। वैधर्म्यदृष्टान्तस्य तु साध्याभाववैकल्यं साधनाभाववैकल्यं उभयाभाववैकल्यं स्वरूपवैकल्यं चेति चतुर्विधः॥

यथा—विश्वं कार्यं, प्रत्यक्षत्वात्, अन्वयेन आत्मवदिति, तत्रैव अदृष्टवदिति मायावदिति खपुष्पवदिति च। यथा वा—विमतं कार्यं, अप्रत्यक्षत्वात्, व्यतिरेकेणात्मवत् इति। तत्रैवादृष्टवदिति मायावदिति खपुष्पवदिति च। उक्तिदोषोऽप्यन्वयदृष्टान्तस्य च व्यतिरेकदृष्टान्तस्य च व्यत्ययेनोक्तिः, अन्वयव्यतिरेकव्याप्त्योर्व्यत्ययेनोक्तिः, तत्रैव साध्यसाधनयोर्व्यत्ययेनोक्तिः, साध्यस्य साधनतयोक्तिः, साध्यतया साधनस्योक्तिश्चेत्यन्वयानुमाने पञ्चविधः। एवं व्यतिरेकानुमाने चेति दशविधः। यथा—पर्वतो वह्निमान्, धूमादित्यन्वयप्रयोगे अन्वयव्याप्तिमुक्त्वा यथा महाह्रद इति, तत्रैव व्यतिरेकव्याप्तिप्रदर्शनानन्तरं यथा महानस इति, तत्रैवान्वयव्याप्तौ यत्र यत्र वह्निस्तत्र तत्र धूमो यथा महानस इति, तत्रैव पर्वतो धूमवान् वन्हिमत्त्वादिति साध्यविपर्ययस्य साधनविपर्ययस्य च दृष्टान्तः। एवं शब्दार्थदोषवशादन्वयव्यतिरेकवशाच्चाष्टादश दृष्टान्ताभासाः। एते दृष्टान्ताभासाः तर्कशास्त्रेऽनिरूपितत्वादत्र कथं निरूप्यन्त इति चेत्, यथायथमासिध्यादिषु हेत्वाभासेष्वन्तर्भावयितुं शक्या इति तत्र पृथङ्न निर्दिष्टाः। अत्र तु शैवागमे पृथङ्निर्दिष्टत्वाद्भेदेन कीर्तिताः। तदुक्तं श्रीमत्पौष्करे—

अनुष्णो वह्निरित्यादिप्रतिज्ञाते सहेतुकम्।
पञ्चानामनुमानस्यावयवानां तु पूर्वयोः॥

वैपरीत्यं समुद्दिष्टं दृष्टान्तस्याधुनोच्यते ।
नित्य आत्मा विभुत्वेन यथाकाशमितीरिते ॥
दृष्टान्तः साध्यविकलः साधने च तथा भवेत् । इत्यादि ॥

(पौ. प्र. प. श्लो. ५८–६०)

एतत्प्रसङ्गाच्छलजातिनिग्रहस्थानानि निरूप्यन्ते । तत्र च्छललक्षणम्—

कंचिदर्थमभिप्रेत्य प्रयुक्ते वचने पुनः ।
अनिष्टमर्थमारोप्य तन्निषेधश्च्छलं मतम् ॥ इति ॥

तच्च त्रिविधम् । वाक्छलं सामान्यच्छलमुपचारच्छलं चेति । तत्र वाक्च्छललक्षणम्—

अभिधावैपरीत्येन कल्पितार्थस्य बाधनम् ॥ इति ॥

तद्यथा—आढ्योऽयं, नवकम्बळत्वादिति प्रयोगे नूतनार्थतया प्रयुक्तस्य नवशब्दस्य संख्यापरत्वमारोप्य निषेधः । कुतोस्य नव कम्बळाः, एक एव कम्बलः प्रत्यक्षसिद्ध इति ॥

सामान्यच्छललक्षणम्—

सामान्यच्छलमेतत्स्यादिति सामान्ययोगतः ।
तात्पर्यवैपरीत्येन कल्पितार्थस्य बाधनम् ॥ इति ॥

अयमहो ब्राह्मणोऽनूचान इति वाक्यं ब्राह्मणस्यानूचानत्वसंभावनामात्रेण कश्चित्प्रयुङ्क्ते । ब्राह्मणत्वस्यानूचानत्वहेतुत्वं तात्पर्यविषयमारोप्य च्छलवादी प्रत्यवतिष्ठते । न ब्राह्मणत्वमनूचानत्वहेतुः, ब्राह्मणब्रुवेष्वनैकान्त्यादिति ॥

उपचारच्छलस्य लक्षणम्—

उपचारप्रयोगेषु गौणलाक्षणिकेषु यः ।
मुख्यार्थासंभवाद्बाध उपचारच्छलं तु तत् ॥ इति ॥

यथा गङ्गायां घोषः, सिंहो माणवक इति प्रयोगे कथं गङ्गायां घोषवासः, कथं वा सिंहो माणवक इति प्रत्यवस्थानम् ॥

अस्य प्रतिवाद्यनुसन्धानापेक्षया वादिना प्रयुक्तस्य च्छल-वाक्यस्य प्रतिवादिना अपरिज्ञाने सदस्यैर्वानुद्घाटने प्रीतवादिनो दोषः, तैरुद्घाटने वा वादिनो दोष इति ॥

अथ जातिः । सा च "[1]साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्य-विकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्था-पत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमा" इति । अत्र द्वन्द्वान्ते श्रूयमाणः समशब्दः प्रत्येकमभिसंबध्यते । आसां सामान्यलक्षणम्—

प्रयुक्ते स्थापनाहेतौ दूषणाशक्तमुत्तरम् ।
जातिमाहुरथान्ये तु स्वव्याघातकमुत्तरम् ॥ इति ॥

तत्र साधर्म्यसमाया वैधर्म्यसमायाश्च जातेर्लक्षणम्—

हेतोर्वादिप्रयुक्तस्य स्वमतस्थापनाकृते ।
साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं तु तत्समे ॥ इति ॥

तत्र साधर्म्यसमा जातिर्यथा- अनित्यः शब्दः कृतकत्वादित्युप-संहारे नैतदेवं, अस्ति ह्याकाशेनापि साधर्म्यममूर्तत्वम्, तद्वन्नित्यः किं न स्यात्, न चैतदेवं, अनित्योऽपि न स्यात् अविशेषादिति ॥

वैधर्म्यसमा जातिर्यथा—पूर्वस्मिन्नेवोपसंहारे घटवैधर्म्यात् श्रावणत्वान्नित्यः किं न स्यादिति । एवमन्येऽपि जातिभेदा ऊह्याः ॥

निग्रहस्थानलक्षणम्—

अखण्डिताहंकृतिना पराहंकारखण्डनम् ।
निग्रहस्तन्निमित्तस्व निग्रहस्थानतोच्यते ॥ इति ॥

---

[1] न्या. सू. अ. ५. आह्नि. १. सू-१.

तानि च [1] प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः, प्रतिज्ञासन्नयासः, हेत्वन्तरं, अर्थान्तरं, निरर्थकं, विज्ञातार्थं, अपार्थं, अप्राप्तकालं, न्यूनं, अधिकं, पुनरुक्तं, अननुभाषणं, अज्ञानं, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासाश्च निग्रहस्थानानीति द्वाविंशतिः ॥

प्रतिज्ञाहानिलक्षणम्—

कथायां यत्र पक्षादि येन निर्दिष्टमादितः ।
तस्य तेन पुनस्त्यागः प्रतिज्ञाहानिरुच्यते ॥

सा च साध्यसाधनधर्मिणां [2] तद्विशेषाणां च त्यागात् षड्विधा। तत्र साध्यप्रतिज्ञाहानिर्यथा—अनित्यः शब्दः, ऐन्द्रियिकत्वादित्युक्ते सामान्यमैन्द्रियिकं नित्यं दृष्टमिति अनैकान्तिकत्वेन प्रत्युक्ते तर्हि शब्दोऽपि नित्यः स्यादिति । एवमन्यान्यपि निग्रहस्थानलक्षणान्यूह्यानि ॥

## अथ शब्दप्रमाणं निरूप्यते.

आप्तवाक्यजन्यं ज्ञानं शब्दप्रमाणम् । आप्तो नाम यथार्थदर्शी यथार्थोपदेष्टा पुरुषः। तद्वाक्यं तु आकाङ्क्षायोग्यतासन्निधिमतां पदानां समूहः । तेन घटः कर्मत्वमानयनं कृतिरित्यनाकाङ्क्षं, "अग्निना सिञ्चेत्" इत्ययोग्यं, व्यवहितोच्चरितं च "गामानय"त्यादि न वाक्यम् । आकाङ्क्षा नाम प्रतिपत्तुर्जिज्ञासा । अनन्वयनिश्चयाभावो योग्यता । अव्यवधानेनोपस्थितिः सन्निधिः । तेनाकाङ्क्षायोग्यतासन्निधिमत्पदकदम्बकं वाक्यम् । तच्च द्विविधम्, लौकिकं वैदिकं चेति । लौकिकं तु नद्यास्तीरे पञ्च फलानि सन्ती-

---

[1] न्या. सू.-अ. ५ आह्नि. २-सू.-१. [2] तद्विशेषणानां-अ.

त्यादिकम् । वैदिकं तु परमाप्तश्रीमत्सदाशिववाक्यम् । तच्च द्विविधम् । वेदः शैवागमश्चेति । वेदवाक्यं तु प्रसिद्धम् । शैवागमवाक्यं तु "मुक्त्यै प्राप्य सतस्तेषां भजेद्रूपं शिवालयम्" इत्यादि । अतो वेदशिवागमयोः परमाप्तसदाशिवप्रणीतत्वात्तावेव यथार्थावबोधकौ । तज्जन्यज्ञानमेव प्रमाणम् ॥

ननु वेदानामनिर्दिष्टप्रवर्तकत्वादपौरुषेयत्वादत एव नित्यत्वान्महाजनपरिगृहीतत्वाच्च प्रामाण्यमुपपद्यते। आगमानां तु तद्विपरीतत्वात् "श्रुतिपथगळितानां तन्त्रमार्गे निवेशः" इत्यादिना तन्त्रानुष्ठाने दोषश्रवणाच्च कथं प्रामाण्यमिति चेत्, सत्यम्; निर्दिष्टप्रवक्तृकाणामार्षाणां मन्वादिस्मृतीनां प्रामाण्यमभ्युपगच्छतां तदुपास्येश्वरप्रणीतागमेषु कथमप्रामाण्यशङ्कावकाशः । अथ यद्यपौरुषेयनित्यवेदमूलकतया तासां प्रामाण्यमिति मन्यसे, तदनुपपन्नम्; तथा हि-वेदस्य स्वरूपतो वा नित्यत्वं प्रवाहतो वा ? नाद्यः; स्वरूपस्य शब्दात्मकतया उच्चारितप्रध्वस्तत्वेन प्रत्यक्षत एवानित्यत्वदर्शनात्, स एवायं गकार इत्यादिप्रत्यभिज्ञानानां सामान्यविषयत्वेन शब्दस्वरूपनित्यतायां प्रमाणत्वाभावाच्च । न द्वितीयः; प्रवाहरूपनित्यताया अध्यापकाध्येतृसम्प्रदायाविच्छेदात्मकत्वात् प्रपञ्चस्याप्युत्पत्तिविनाशवत्त्वेन वेदस्यापि तदन्तर्भूतत्वेनानित्यत्वमेव। तस्मान्नित्यनिर्मलसर्वज्ञपक्षपातरहितयथार्थग्राहकाव्ययपरिपूर्णस्वतन्त्रपशुपाशहन्तृपरमाप्तपरमेश्वरप्रणीतत्वेनैव वेदानामागमानां च प्रामाण्यम् । वेदस्य स्वयंभूत्वनित्यत्वश्रवणात्कथमुत्पत्तिविनाशवत्त्वमिति चेत्तत्तथा न भवति । स्वयंभुपरमाप्तपरमेश्वरप्रणीतत्वेन कार्ये कारणत्वोपचारात् स्वयंभूत्वस्याऽऽप्रलयस्थायित्वेन नित्यत्वस्य च तत्र तत्र श्रवणात् । आगमानां परमेश्वरप्रणीतत्वेन प्रामाण्याभ्युपगमे

वामादीनामपि प्रामाण्यप्रसङ्ग इति चेत्सत्यम्; ईश्वरेणैव "वैदिककर्माधिकारिणां वेदोपबृंहितानि, षण्मुनिशापग्रस्तद्विजादीनां स्वतन्त्रागमकर्मानुष्ठानद्वारा जन्मान्तरे वैदिकशैवकर्मस्वधिकारसिद्ध्यर्थं असुरादिव्यामोहार्थं चान्यानि वामादीनि मयैव कथितानि; तस्मान्मद्भक्तैः शिष्टैर्वेदविरुद्धानि स्वतन्त्रागमानि न सेव्यानि" इत्युक्त्वा-त्तत्तदधिकारिणः प्रत्येव तस्य तस्य प्रामाण्यम्। न सर्वान्प्रति। तदुक्तं [1]कामिके—

शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्च स स्मृतः।
श्रुतिसारमयः श्रौतः स्वतन्त्र इतरो मतः॥
अन्यानि चैव शास्त्राणि लोकेस्मिन्मोहनाय वै।
वेदवादविरुद्धानि मयैव कथितानि तु॥
वामं पाशुपतं चैव वातुलं चैव भैरवम्।
न सेव्यमेतत्कथितं वेदबाह्यं तथेतरत्॥ इति॥

तस्मात्तन्त्रानुष्ठाननिषेधस्यापि वेदविरुद्धतन्त्रविषयत्वमेव। आगमादन्येष्वार्षेषु दैवतेषु च ज्ञानमोक्षयोः संभवात् तैरेव शास्त्रैः पर्याप्तमितिचेन्न; तेषु प्रकृत्यधोगतानां चतुर्विंशतितत्त्वानामेव निरूपणात् षट्त्रिंशत्तत्त्वतीतपरममोक्षानिरूपणाच्च परस्परविरुद्धत्वाच्च। तस्मात्सार्वज्ञ्यादिविशिष्टपरमेश्वरप्रणीतागमैरेव ज्ञानमोक्षयोः सिद्धिरिति सर्वमवदातम्। तदुक्तं पौष्करे—

अथ वा सद्भिरप्राप्ताः श्रद्धया शिवगोचराः।
अन्ये तु सज्जनायाताः प्रकृत्याद्यवगोचराः॥
न चार्षैं पौरुषैर्वाक्यैः ऋषिभिर्दैविकं तथा।
न देवैर्ब्रह्मणो वाक्यं वैष्णवं पद्मजन्मना॥

---

[1] वायुसंहितायां—द्रे,

तथा रौद्रं न हरिणा न रौद्रेण शिवोक्तकम् ।
बाध्यमूर्ध्वोर्ध्ववैशिष्ट्यादधोऽधो बाध्यमूर्ध्वतः ॥
शिवागमाविरोधेन शास्त्रं सर्वं व्यवस्थितम् ।
नान्यशास्त्रविरोधेन तत्संवादितया तथा ॥
शिवशास्त्रं व्यवस्थाप्यं तद्व्यवस्थापकं यतः ।
यस्य यस्य हि शास्त्रस्य यावती व्याप्तिरिष्यते ॥
तावत्येव भवेद्विप्राः प्रामाण्यं तस्य तस्य च ।
आप्तोक्तिरागमः सोऽपि परोक्षार्थैकसाधनम् ॥
प्रत्यक्षेणानुमानेन यदि वार्थं सुनिश्चितम् ।
यो वक्ति सोऽप्यमाप्तः स्यात्तस्मादाप्ततरः शिवः ॥
सुप्रसन्नेन्द्रियग्रामः सर्वज्ञः सर्वगोचरः ।
पक्षपातविनिर्मुक्तो यथार्थग्राहकः सदा ॥
अव्ययः परिपूर्णश्च स्वतन्त्रः पशुपाशहा ।
प्रमाणमेकं तद्वाक्यं तथ्यं श्रेयोनिधिः सदा ॥
सृष्ट्यनन्तरमेवेशः शुद्धाध्वविषयानणून् ।
स्वांशुसंपर्शनादेव कृत्वा दृक्क्रियेयोत्कटान् ॥
सदाशिवोऽपि भगवान्नादरूपतया गतम् ।
षट्पदार्थमयं ज्ञानमनेकच्छन्द एव च ॥
पूर्वतो दशसङ्ख्यातं शिवभेदं तथापरम् ।
रौद्रमष्टादशाविधं तेभ्योऽवादीत् कृपानिधिः ॥ इति ॥

पौ.प्र.प.श्लो.७४-७९, ६१-६७.

अत्र प्रमाणशब्देन करणव्युत्पत्या शब्दार्थयोरभेदोपचाराद्वा शब्द उच्यते। सर्वत्र चिच्छक्तेरेव प्रामाण्यसमर्थनात् । तथा चोक्तं श्रीमत्पौष्करे—

शब्दस्तु पारम्पर्येण शिवज्ञानानुमापकः ॥ इति ॥

(पौ. प्र. प. श्लो. ७४)

पदं नाम वर्णसमूहः। वर्णानां क्षणभङ्गुरत्वात् अर्थप्रत्यायकत्वाभावात् अर्थप्रत्ययनार्थं वर्णेषु स्फोटो नाम कश्चित्पदार्थो नित्योऽङ्गीकरणीयः। इत्थं प्रमाणानां त्रित्वं व्यवस्थितम्। एतेष्वेव त्रिषु प्रमाणेषूपमानादीनां सर्वेषां यथायथमन्तर्भावः। तथा हि—अर्थापत्तिस्तावदनुमानेऽन्तर्भवति। कथं? अनुपपद्यमानार्थदर्शनादुपपादकार्थान्तरकल्पनमर्थापत्तिः। यथा जीवतो देवदत्तस्य गृहेऽभावमुपलभ्य बहिर्भावकल्पनम्। तदिदमनुपपत्तेरविनाभावरूपतया तज्ज्ञानजन्यमित्यनुमानमेव। अनुपपत्तिर्हि बहिर्भावं विना जीवतो गृहेऽभावस्यासत्त्वम्। सोऽयमविनाभाव एव। गृहे असन् देवदत्तो बहिः सन्, शतवर्षजीवित्वे सति गृहनिष्ठाभावप्रतियोगित्वात्। यन्नैवं तन्नैवम्। यथा अजीवन्यज्ञदत्त इति॥

उपमानमप्यनुमानमेव। न पृथक्प्रमाणम्। तथा हि—यदि तावत्सादृश्यज्ञानमुपमानं तदा प्रत्यक्षमेव तत्। अयं तत्सदृश इति प्रत्यक्षेण ग्रहसंभवात्। यदि त्वेतत्सदृशः स इति ज्ञानमुपमानं तदा स एतत्सदृशः, एतद्गतसादृश्यप्रतियोगित्वात्, यो यत्सादृश्यप्रतियोगी स तत्सदृशः, यथा सम्मत इत्यनुमानमेव। अथ त्वतिदेशवाक्यश्रवणसमनन्तरं तदर्थप्रत्याभिज्ञया तस्य वाच्यत्वपरिच्छेदः तदापि पिण्डगतवाच्यतापरिच्छेदो वाक्यात्। पिण्डगतजातिप्रवृत्तिनिमित्ततापरिच्छेदो लाघवलिङ्गादिति न मानान्तरमुपमानम्॥

संभवोऽप्यनुमानान्नातिरिच्यते। सहस्रेषु शतं संभवतीति शतसद्भावनिश्चयो हि संभवः। स च सहस्रस्य शताविनाभावग्रहेण जनित इत्यनुमानमेव॥

ऐतिह्यमपि यथार्थं चेत् शब्द एवेति सिद्धम्॥

अभावोऽपि प्रत्यक्षान्नातिरिच्यते । तथा हि—घटाद्यभाव इन्द्रियेण गृह्यते । तत्प्रतीतिस्तदन्वयव्यतिरेकानुविधानात् । न च वह्न्यादिप्रतीताविवाधिकरणग्रहणतदुपक्षयादन्यथासिद्धं तदनुविधानमिति युक्तम् । निमीलिताक्षस्य त्वगुपनीते घटादौ नीलाद्यभावग्रह-[1]प्रसङ्गात् । प्रतियोगिग्राहकेन्द्रियजन्यमधिकरणज्ञानं हेतुरिति चेन्न; वायोश्चक्षुषा ग्रहणाभावेन तत्र रूपाभावग्रहप्रसङ्गात् । इन्द्रियदोषादिना अभावप्रतीतौ दोषदर्शनादपि तस्या इन्द्रियजन्यत्वमभ्युपेयम् । न चाभावेन संयोगादिसंनिकर्षो नास्तीति कथं तस्यैन्द्रियिकत्वमिति वाच्यम्; ऐन्द्रियिकत्वानुरोधेन विशेषणतासन्निकर्षकल्पनोपपत्तेः । नचैन्द्रियिकत्वसंनिकर्षकल्पनयोः परस्पराश्रयत्वम् । ऐन्द्रियिकत्वकल्पनायां सन्निकर्षकल्पनाया अनपेक्षितत्वात् । सन्निकर्षो ह्यैन्द्रियिकत्वेऽपेक्षितः । न तु तत्कल्पनापि तत्कल्पनायाम् ॥

परिशेषोऽप्यनुमानमेव । अयं च दशस्वेतेषु चोरोऽस्ति, एते नव अचोरा इत्युक्ते अयं चोर इति निश्चयः । चोरत्वं अमुकवर्ति, पुरोवर्तिष्वन्यतमवर्तित्वे सति अमुकान्यैतदन्यतमावर्तित्वात्, अमुकत्ववदित्यनुमानमेव । अमुकत्वादौ पूर्वं व्याप्तिग्रहाभावेऽपि सामान्यतो व्याप्तिग्रहसंभवात् । इति सिद्धं प्रमाणत्रैविध्यम् ॥

एतेषां प्रामाण्यं स्वत एव गृह्यते उत्पद्यते च । तत्र स्वतो ग्राह्यत्वं नाम बाधानवतारकालीनयावत्स्वाश्रयग्राहकग्राह्यत्वम् । अत्र च प्रमाणं सामग्र्येव । ज्ञानग्राहकेण हि ज्ञानं विषयावच्छिन्नं गृह्यते । विषयश्च विशेषणविशेष्यवत्तत्संबन्धोऽपि । अत एव [2]घटमेव घटतया जानामीत्यनुव्यवसायो दृश्यते । न चैवं प्रामाण्ये संशयो न स्यात्; निश्चिते तदयोगादिति वाच्यम् । निश्चितेऽप्यर्थे ज्ञानस्य दोषजन्यत्व-

[1] संभवात्-दे. [2] घट एव वस्तुज्ञानम्-मै.

संशयेन संशयोपपत्तेः। अन्यथा परतस्त्ववादिनोऽपि प्रामाण्यसंशयोऽपि न स्यात्। अर्थतथात्वस्यानुव्यवसायेनानिश्चयेऽपि व्यवसायेन निश्चयात्। प्रामाण्यसंशयस्य च तत्संशयपर्यवसन्नत्वात्। अन्यथा सुनिश्चितेऽप्यर्थे प्रामाण्यसंशयापत्तेः। उत्पत्तौ स्वतस्त्वं च—यावत्स्वाश्रयज्ञानजनकसामग्रीजन्यत्वम्। ज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं प्रमायाः स्वतस्त्वमिति। अस्ति चात्रानुमानम्। विमतप्रमा ज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तजन्या न भवति, अप्रमात्वानधिकरणत्वात्, घटवादिति। न च विमतप्रमा, ज्ञानहेत्वतिरिक्तहेत्वधीना, कार्यत्वे सति तद्विशेषत्वात्, अप्रमावदित्यौदयनमनुमानं बाधकमिति शङ्कनीयम्। प्रमा दोषव्यतिरिक्तज्ञानहेत्वतिरिक्तजन्या न भवति, ज्ञानत्वात्, अप्रमावदिति प्रतिसाधनग्रहग्रस्तत्वात्, ज्ञानसामग्रीमात्रादेव प्रमोत्पत्तिसंभवे तदतिरिक्तस्य गुणस्य दोषाभावस्य वा कारणत्वकल्पनायां कल्पनागौरवप्रसङ्गाच्च ॥

ननु दोषस्याप्रमाहेतुत्वेन प्रमायास्तदभावहेतुत्वं दुर्निवारमिति चेत्, दोषाभावस्याप्रमाप्रतिबन्धकत्वेनान्यथासिद्धत्वात्। अप्रमा तु परत एवोत्पद्यते ज्ञायते च। तस्याः ज्ञानसामग्रीव्यतिरिक्तस्य दोषस्योत्पत्तौ हेतुत्वात्। ज्ञप्तौ च ज्ञानग्राहकसामग्र्यतिरिक्तस्य मानान्तरस्य ग्राहकत्वसंभवात्। लक्षणं तु विशेष्यवृत्त्यप्रकारकज्ञानत्वं, अतद्वति तत्प्रकारकज्ञानत्वं वा। एतादृशं च भ्रान्तिज्ञानं प्राभाकरोक्तरीत्या ग्रहणस्मरणात्मकज्ञानद्वयं न भवति; इदं रजतमिति सामानाधिकरण्यप्रतिभासविरोधात्। न च इदं रजतमित्यत्र ज्ञानं रजतं च शुक्तिकायामनिर्वचनीयमुत्पद्यत इति वाच्यम्, तदुत्पत्तौ सामग्र्या अभावात्। न चासदेव रजतमुत्पद्यत इति

वक्तुं शक्यम्; तस्य तुच्छस्य उत्पत्तिप्रतिपत्त्योरयोगात्। न चात्मन्येव रजतं भासत इति वाच्यम्, तथात्वे अहं रजतमिति प्रत्ययप्रसङ्गात्। तस्मादितरासां ख्यातीनां अप्रामाणिकत्वादप्रमा अन्यथाख्यातिरेवेति सिद्धम्॥

इति श्रीमदतिवर्णाश्रमाचार्यशैवपरिपालकशिवाग्रयोगीन्द्रज्ञानशिवाचार्य-विरचितायां शैवपरिभाषायां प्रमाणनिरूपणं नाम

प्रथमः परिच्छेदः॥

---

## अथ द्वितीयः परिच्छेदः.

अथ प्रमेयं निरूप्यते । तच्च त्रिविधम्; पतिः पशुः पाशश्चेति । तदुक्तम्—

पतिः पशुः पाश इति पदार्थास्त्रय ईरिताः ॥ इति ॥

तत्र पशूनामस्वातन्त्र्यात् पाशानाम[1]चेतनत्वात् पत्युः प्रथममुद्देशः । अनन्तरं चेतनत्वसाधर्म्यात् पशूनाम् । तदनु पाशस्यावशिष्टस्य । ननु—

सप्त स्वायंभुवे प्रोक्ताः षट् पौष्करमतङ्गयोः ।

श्रीमत्पराख्ये पञ्चोक्ताः पदार्थाः रौरवे त्रयः ॥

इति पदार्थस्य नानाविधसङ्ख्यत्वदर्शनात् कथं पदार्थास्त्रय एवेति चेत्, सत्यम्; तेषां पतिपशुव्यतिरिक्तानां पाशपदार्थ एवान्तर्भावात्, अस्मत्सन्तानादिमुनेर्वामदेवस्य रौरवागमप्रधानत्वाच्च तदनुसारेण त्रयः पदार्था इत्युक्तमित्याविरोधः । तत्र पतिशब्देन इन्द्र इत्युक्ते देवेन्द्र इतिवत् भामेत्युक्ते सत्यभामेतिवच्च नामैकदेशे नामग्रहणात्पशुपतिरिति हर उच्यते । ननु सृष्टिस्थितिसंहाररूपकृत्यत्रयस्य ब्रह्मविष्णुरुद्रकर्तृकत्वेन वेदागमपुराणेषु बहुशः श्रुतत्वादत्र हर एक एव पतिरिति कथं निरूप्यत इति चेत्, प्राकृतसृष्ट्यादिकर्तृणां गुणत्रयाधिष्ठितत्रिमूर्तीनां मध्ये रुद्र एव कर्तेत्युक्तं चेत् शङ्कावकाशः । अत्र मयोक्तं गुणत्रयातीतं त्रिमूर्तीनां कारणात्मकं स्थूलसूक्ष्मशून्यरूपरहितं चिदानन्दैकरूपम् । तच्च गुणनामाक्रियारहितमपि योगवृत्त्या ब्रह्मविष्णुरुद्रादिसर्वशब्दवाच्यं परतत्त्वमिति नात्र शङ्कावकाशः ।

तदुक्तं देवीकालोत्तरे—

न स्थूलसूक्ष्मो न च शून्यरूपो ज्ञानैकरूपो जगदेकबन्धुः ॥ इति ॥

---

[1] चैतन्यात्-दे.

पराख्ये—

[1] एको हि नामगैर्भेदैः स्थितः स परमेश्वरः।
बृहत्वाद्बृंहणत्वाच्च ब्रह्मेत्र शिवयोगतः ॥
विष्णुः प्रभवशीलत्वात्प्रभवो जगतां प्रभुः।
रुजं द्रावयते यस्मात्तेन रुद्रो रुजः क्षयात् ॥ इति ॥

स्कान्दपुराणे सूतसंहितायाम्—

विकल्परहितं तत्त्वं ज्ञानमानन्दमव्ययम्।
न च नामानि रूपाणि शिवस्य परमात्मनः ॥
तथापि मायया तस्य नामरूपे प्रकल्पिते।
शिवो रुद्रो महादेवः शंकरो ब्रह्म [2] तत्परम् ॥
विष्णुनारायणादीनि नामानि परमेश्वरे।
कथंचिद्योगवृत्त्या तु वर्तन्ते न तु मुख्यया ॥ इति ॥

तस्य परतत्त्वस्य स्वरूपलक्षणं पशुपाशप्रमाणागम्यं निर्मलनिरतिशयस्वप्रकाशज्ञानानन्दात्मकं विभु नित्यं स्वतन्त्रं शिवमिति। तथा चोक्तं श्रीमत्स्वायंभुवे—

अप्रमेयमनिर्देश्यमनौपम्यमनामयम्।
सूक्ष्मं सर्वगतं नित्यं ध्रुवमव्ययमीश्वरम् ॥ इति ॥

एतच्च लक्षणमतव्द्यावृत्त्यैवोक्तमित्येतत्तत्रैवोक्तम्—

अप्रमेयमनन्तत्वादनिर्देश्यमलक्ष्यतः।
अनौपम्यमसादृश्यान्निर्मलत्वादनामयम् ॥
सूक्ष्मं चानुपलभ्यत्वाद्व्यापकत्वाच्च सर्वगम्।
नित्यं कारणशून्यत्वादचलत्वाच्च तद्ध्रुवम्।
अव्ययं परिपूर्णत्वात् स्वामिभावात्तथेश्वरम् ॥ इति ॥

---

[1] एको हि नामगैर्भोगैः—अ. [2] सत्परम्—मै.

श्रीमत्पराख्ये च—

तत्स्वरूपं भवेदस्य शिवस्य परमात्मनः ।
चिद्रूपमात्मनो रूपं दृक्क्रियाशक्तिलक्षणम् ॥ इति ॥

देवीकालोत्तरे—

आकाशमिव सर्वं तु सबाह्याभ्यन्तर प्रिये ।
परानन्दमरूपं तु पश्यन्नानन्दभाग्भवेत् ॥ इति ॥

श्रीमदाचिन्त्ये—

नाध्यक्षं नापि तल्लिङ्गं न शाब्दमपि शाङ्करम् ।
यत्सुखं परमं ज्ञेयं ........ । इति ।
स्वसंवेद्य परं ज्योतिः ... ... ॥ इति च ।

तस्य पञ्चविधकृत्यकारित्वं तटस्थलक्षणम् । न चानन्तेशादिष्वतिव्याप्तिः । तेषामपि तदभिव्यक्त्या पञ्चविधकृत्यकारित्वेन लक्ष्यत्वात् । तानि पञ्चविधकृत्यानि सृष्टिस्थिति[1]संहारतिरोधानानुग्रहाः । तदुक्तं श्रीमन्मृगेन्द्रे—

जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तयः ।
कृत्यं सकारकफलं ज्ञेयमस्यैतदेव हि ॥ इति ॥

(मृ. प्र. २. श्लो. ३)

अस्य च पत्युः सद्भावे वेदागमावनुमानं च प्रमाणम् । वेदागमौ प्रसिद्धौ । अनुमान तु—स्त्रीपुंनपुंसकादिभावेन नानाविधं तनुकरणादिकं जगत् सकर्तृकम्, कार्यत्वात्, घटवत् इति । यथा वा विवादाध्यासितं जगत् स्वोपादानवित्कर्तृपूर्वकम्, कार्यत्वात्, घटवदिति । तथाचोक्तं श्रीमच्छिवज्ञानबोधे—

स्त्रीपुंनपुंसकादित्वाज्जगतः कार्यदर्शनात् ।
अस्ति कर्ता स हृत्वैतत्सृजत्यस्मान् प्रभुर्हरः ॥ इति ॥ (शिव. सू. १)

---

[1] संहृति—दे.

श्रीमत्पौष्करे—

विवादाध्यासितं विश्वं विश्ववित्कर्तृपूर्वकम् ।
कार्यत्वादावयोः सिद्धं कार्यं कुम्भादिकं यथा ॥ इति

(पौ. पति. प. श्लो. ९२)

श्रीमृगेन्द्रे—

अथोपलभ्य देहादि वस्तु कार्यत्वधर्मकम् ।
कर्तारमस्य जानीमो विशिष्टमनुमानतः ॥ इति ॥

(मृ. प्र. ३ श्लो. १)

श्रीमत्पराख्ये च—

कर्म चिद्रहितं तस्माद्योजकं तदपेक्षते ।
योजकः स महेशानः स्वेच्छया बलवान्यतः ॥ इति ॥

अन्यत्राप्युक्तम्—

अचेतनस्य मायादेः प्रवर्तकतया पतिः ।
सिद्धः सर्वार्थवित्कर्ता व्यापकः सततोदितः ॥ इति ॥

श्रीमन्मतङ्गे—

धर्मेण साध्यते धर्मी क्वचित्कार्येण कारणम् ।
कारणेन क्वचित्कार्यं क्वचिदाम्नायदर्शनात् ॥
घटादिधर्मात्कर्तृत्वं कुलाले धर्मिणि स्थितम् । इति ॥

घटादिगोचरक्रियाशक्तिरूपाद्धर्मादित्यर्थः । न चोक्तेष्वनुमानेषु पक्षतावच्छेदकाननुगमः । क्षित्यादित्वस्यैव पक्षतावच्छेदकत्वेन विवक्षितत्वात् । न चाप्रयोजकत्वम्; एतादृशकर्त्रभावे कार्यानुपलब्धेरेव बाधकत्वात् । न च कार्यत्वं स्वरूपतोऽसिद्धम्; सावयवत्वेन कार्यत्वस्य सिद्धेः । नापि शरीरजन्यत्वमुपाधिः; लाघवेन जन्यत्वस्यैव सकर्तृताप्रयोजकत्वात् । उपाधिनिरासादेव तन्निबन्धना व्याप्यत्वासिद्धिरपि न । न चायं हेतुर्विरुद्धः;

साध्यविपरीतेनाव्याप्यत्वात् । नाप्यनैकान्तिकः; अकर्तृकतया निश्चिते आत्मादौ कार्यत्वाभावात् । न च कार्यत्ववत्यङ्कुरादावकर्तृकत्वसन्देहेन सन्दिग्धानैकान्तिकत्वमस्त्विति वाच्यम्; साध्याभावसन्देहे सन्दिग्धानैकान्तिकत्वाभावात् । अन्यथा पर्वतादौ वह्न्यभावसन्देहेन धूमादेरपि सन्दिग्धानैकान्तिकत्वप्रसङ्गात् । न च विमतमकर्तृकम्, शरीराजन्यत्वादित्यनेन सत्प्रतिपक्षत्वम्; तस्याप्युपाधिनिरासोक्तिरीत्यैव निरासात् ॥

अयं च कर्ता अवस्थाभेदेन त्रिविधः। शक्त उद्युक्तः प्रवृत्तश्चेति। यदा सर्वं कार्यमुपादाने लीनं तदा तज्जननशक्तिमात्रयुक्तत्वाच्छक्तः। यदा तु तदीयशक्तिः कार्यजननाभिमुखी तदोद्युक्तः। यदा तु सा जनितकार्या तदा प्रवृत्तशक्तियुक्तत्वात्प्रवृत्तः। तदुक्तं श्रीमृगेन्द्रे—

शक्तोद्युक्तः प्रवृत्तश्च कर्ता त्रिविध इष्यते।
शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारतः ॥ इति ॥

श्रीमत्पौष्करे च—

लयादिकोऽप्ययं भेदः शक्तितस्तु ततः स्थितः।
बिन्दुक्षोभो यतः शंभोः शक्तेरेव प्रवर्तते ॥
ज्ञानक्रियात्मिका सापि नित्या नित्योदितप्रभा।
सा पराभिमुखी सर्वबन्धलेशविवर्जिता ॥
अनन्यान्या शिवात्मैव वस्तुतो मूर्तिरीश्वरी।
लयावस्थां यदा प्राप्ता तदोदासीनरूपिणी ॥
कार्याभावादुदासीना साम्यावस्था तदैव हि।
विज्ञानक्रिययोः साम्यं यस्मादुद्युक्तकर्तृषु ॥
तदा ह्येतत्करोमीति व्यापारे साम्यमेतयोः।
अधिकारे क्रियोद्युक्ता कार्येष्वाधिकृता यतः ॥ इति ॥

(पौ. पति. प. श्लो. ३८–४२)

ननु शिवसमवेतायां शक्तौ किं मानम्? विमतं करण जन्यम्, कार्यत्वादित्यनुमानमिति चेन्न; ज्ञानेच्छादीनां करणत्वसम्भवेन अर्थान्तरतया अनेन शक्तिसिध्ययोगादिति, मैवम्; ज्ञानेच्छादीनामेव शक्तित्वेन तैरर्थान्तरस्याभावात्। तर्हि तेषां भेदेन शक्तेरपि नानात्वं स्यादिति ऐक्यसिद्धान्तो व्याहन्येतेति चेन्न; ज्ञानेच्छादीनामपि स्वतो भेदाभावात्। एकस्या एव शक्तेर्यदा कार्यानुकूलादृष्टादिपरामर्शित्वं तदा ज्ञानत्वम्, यदा त्वेवं भवत्वित्याकारता तदा इच्छात्वम्, यदा तत्तत्कार्यजनकत्वं तदा कृतित्वमिति ज्ञानादिभेदोपपत्तेः। एवमेक एवायं कर्ता नवधा भिद्यते। तत्र शिवशक्तिनादबिन्द्वाख्याश्चत्वारो निष्कळभेदाः। सदाशिवाख्यः सकळनिष्कळ एकः। महेश्वररुद्रविष्णुब्रह्माख्याश्चत्वारः सकळभेदाः। तत्र द्वौ शक्तिभेदौ। अपरे सप्त शिवभेदाः। एवमेकैव तच्छक्तिः बिन्दुशक्तिमनोन्मनीमहेश्वर्युमालक्ष्मीवाणीभेदेन सप्तधा भिद्यते।

ननु बिन्दोरवस्थाभेदेन कर्तुः शिवस्य भेद उक्तः, तन्न सङ्गच्छते; अचेतनस्य बिन्दोः स्वतः प्रवृत्त्ययोगात्। अथ चेदीश्वर एव तत्प्रवृत्तिं कारयति तदा तस्य विकारित्वं स्यादितिचेत्, उच्यते— तत्र कर्तृत्वं द्विविधम्, सङ्कल्पमात्रेण करणेन चेति। तत्र करणापेक्षकर्तृत्वं कुलालादीनाम्। सङ्कल्पोऽपि द्विविधः, मनोव्यापाररूपः सन्निधिरूपश्चेति। तत्र मनोव्यापारेण कर्तृत्वं ब्रह्मादीनाम्। शिवस्य तु सन्निधिमात्रेण; न तु विकृतिहेतुबाह्यकरणापेक्षया; निर्मलतया तस्य करणादिरूपोपाधिरहितत्वात्। लोके चोपधिमतामेव विकारित्वं दृष्टम्। तस्मात्कर्तृत्वेनाविकारित्वं न विरुद्धम्। न च यदि तस्य देहाद्युपाधिर्नास्ति तदा कर्तृत्वमपि नास्ति, लोके देहाद्युपाधिमत एव कुलालादेः कर्तृत्वदर्शनादिति वाच्यम्; स्वदेहप्रेरणादावुपाध्यभावेऽपि कर्तृत्वदर्शनात्। तत्राप्युपाध्यन्तरस्वीकारेऽ

नवस्थाप्रसङ्गात् । तस्मात्प्रथमसृष्टौ समस्तोपाधिवर्जितः प्रवृत्ता-शेषशक्तिकः शिव एव कर्ताभ्युपेयः । तस्य च पञ्चविधकृत्येषु सूर्यस्य कमलोत्पलनवनीतपङ्कसम्बन्धिषु विकासमुकुलीभावद्रवीकरण-शोषणरूपकार्येष्विव सान्निधिमात्रेण कर्तृत्वम् ।
तथा चोक्तं श्रीमत्पौष्करे—

ऋषयः—

बिन्द्ववस्थाविशेषेण शिवभेदस्त्वयोदितः ।
बिन्दोरचेतनत्वेन प्रवृत्तिः स्वत एव न ॥
कर्ता चेत्तत्प्रवृत्त्यर्थं विकारी स्यात्तदा शिवः ।
एवं विरोध आपन्ने परिहारं वदेश्वर ॥

ईश्वरः—

कर्तृत्वं द्विविधं विप्राः! सङ्कल्पात्करणादपि ।
न हि सङ्कल्पमात्रेण कुलालैः क्रियते घटः ॥
शिवः सङ्कल्पमात्रेण बिन्दुक्षोभकरः सदा ।
न व्यापारविशेषेण येनायं विकृतो भवेत् ॥
समस्तोपाधिशून्यत्वान्निर्मलत्वाच्च हे द्विजाः ॥
य एवोपाधिमन्तस्ते विकृताः कार्यजन्मनि ॥
ततश्च नाविकारित्वं कर्तृत्वेन विरुध्यते ।
समस्तोपाधिशून्यत्वात्कर्तृत्वं नेष्यते कथम् ॥
कर्तृत्वप्रतिबन्धत्वादुपाधेस्तद्वियोगतः ।
भवेत्प्रत्युत कर्तृत्वं प्राचुर्याय मुनीश्वराः ॥
अदेहस्यापि कर्तृत्वं स्वदेहप्रेरणे यथा ।
सदेहस्यापि कर्तृत्वं सर्वत्रापि यदीष्यते ॥
तद्देहस्यापि कार्यत्वाद्व्याप्तं कर्त्रन्तरेण तत् ।

तस्य देहादयोऽप्येवमित्यवस्था न कुत्रचित् ॥
ततः प्रथमसृष्टेस्तु समस्तोपाधिवर्जितः ।
कर्ता महेश एवेष्टः प्रवृत्ताशेषशक्तिकः ॥
यथार्को दिनचेष्टानां सन्निधेरुपकारकः ।
तथा सान्निधिमात्रेण विदधात्यखिलं शिवः ॥ इति ॥

(पौ. प. प. श्लो. २७–३७)

ननु "तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः" इत्यादिना शिवस्य मन्त्रशरीरत्वश्रवणात्कथमशरीरत्वमिति चेत्, सत्यम्; अत्र शास्त्रे मननत्राणयोगितया शक्तेरेव मन्त्रशब्देनाभिधानात् तद्वपुः शाक्तम्। ननु शाक्तत्वं शक्त्यारब्धत्वं शक्तिपरिणामत्वं वा? तथात्वे तस्य निर्विकारत्वनित्यत्वादिप्रतिपादकागमादिविरोधः। तथा च शक्तेरेव कार्यभेदभिन्नाया मूर्धादिभावकल्पनयोपचारेण शरीरत्वाभ्युपगमः। तस्याश्च तदभिन्नत्वान्न वास्तवमस्य शरीरत्वम्। तथा चोक्तं श्रीमृगेन्द्रे—

लोके वपुष्मतो दृष्टं कृत्यं सोऽप्यस्मदादिवत्।
[1] (म)मूलाद्यसम्भवाच्छाक्तं वपुर्नैतादृशं प्रभोः ॥
तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः।
ईशतत्पुरुषाघोरवामाजैर्मस्तकादिकम् ॥
ईष्टे येन जगत्सर्वं गुणेनोपरिवर्तिना।
स मूर्धा समदेशत्वान्मूर्धा नावयवस्तनोः ॥
तस्य तस्य तनुर्या पूस्तस्या मुषति येन सः।
तत्राणाद्व्यञ्जनाच्चापि स तत्पुरुषवक्त्रकः ॥
हृदयं बोधपर्यायः सोऽस्याघोरः शिवो यतः।
परिग्रहस्य घोरत्वाद्घोरोक्तिरुपचारतः ॥

[1] तस्याश्च सम्भ (मै).

वामस्त्रिवर्गो वामत्वाद्रहस्यश्च स्वभावतः ।
वामं धाम परं गुह्यं यस्यासौ देवगुह्यकः ॥
सद्योऽणूनां मूर्तयः सम्भवन्ति यस्येच्छातस्तेन सद्योऽभिधानः ।
सद्योमूर्तिर्योगिनां वा विधत्ते सद्योमूर्तिः कृत्यशैघ्र्यान्न मूर्तेः ॥
इत्थं शक्तिः कुर्वती देहकृत्यं देहाभावादुच्यते देहशब्दैः ।
तस्या भेदा येऽपि वामादयः स्युस्तेऽपि प्रोक्ताः कृत्यभेदेन सद्भिः ॥

(मृ. प्र. ३ श्लो. ७-१४)

स इत्थं विग्रहोऽनेन कारणेनाहतौजसा ।
करोति सर्वदा कृत्यं यदा यदुपचर्यते ॥ इति ।

(मृ. प्र. ४ श्लो. १)

न चानन्तेश्वरश्रीकण्ठादीनां शिवभेदानां शरीरित्वेन शिवस्यापि-शरीरित्वं स्यादिति वाच्यम्; तत्रापि तेषां शिवभेदत्वस्य तदभिव्यक्ततदधिष्ठातृशिवशक्त्यायत्तत्वात् । अत एवैतेषां मन्त्रेश्वराणुसदाशिवानामपि पतिपदार्थेऽन्तर्भावः । कारकपदार्थस्यापि दीक्षात्मकशिवशक्तिरूपतया तत्रैवान्तर्भावः । अयमेव च जगतो निमित्तम् । तत्समवायिचिच्छक्तेर्मायोपाहितत्वेनोपादानत्वमपि । न तु परमाणवो नापि प्रकृतिः नापि केवलमायाद्वयम् । तथा हि—न तावत्परमाणवो जगदुपादानम्; प्रमाणाभावेन तेषामेवासिद्धेः । ननु अनुमानं मानम् । तथाहि—जालसूर्यमरीचिसंस्थं सूक्ष्मं रजः स्वन्यूनपरिमाणद्रव्यारब्धं, कार्यद्रव्यत्वात्, घटवदिति परिदृश्यमानस्य सूक्ष्मरजसः कारणेऽनुमिते तस्य महदारम्भकत्वेन कार्यत्वे चानुमिते तेनैव हेतुना तस्यापि तथाविधद्रव्यारब्धत्वमनुमीयते । तथा च दृश्यमानस्य सूक्ष्मद्रव्यस्य यत् परम्परयाऽऽरम्भकं स एव परमाणुः । तथाणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं, परिमाणानां

तारतम्यत्वात्, महत्परिमाणतारतम्यवादित्यनुमानेनापि परमाणुसिद्धिरिति, मैवम्; समानपरिमाणदुग्धारब्धैर्दध्यादिभिराधिकपरिमाणसार्पिराद्यारब्धैर्घृतादिभिश्चाद्यस्य हेतोरनैकान्तिकत्वात्। तत्र तदवयवारब्धत्वे प्रमाणाभावात्। द्वितीयस्य च परिदृश्यमाने परिमाण एव विश्रान्तिसम्भवेन अभिमतार्थासाधकत्वात्। तस्मात्परमाणूनामेवाभावान्न तेषामुपादानत्वम्। नापि प्रकृतिः; तस्या महदाद्यपेक्षया उपादानत्वस्यास्माभिरभ्युपगमात् परमोपादानत्वं तु नास्ति; तस्याः कार्यत्वस्य समर्थयिष्यमाणतया उपादेयत्वात्। नापि माया; किं तु तस्या उपादानकोटिनिवेशमात्राभ्युपगमे इष्टापत्तेः। तस्या एवोपादानत्वमित्युपगमस्तु मायाविशिष्टशिवस्योपादानत्वसाधकप्रमाणेन बाधितः। तच्च प्रमाणं पञ्चमीश्रुत्यादिकम्। तथा हि स्कान्दे—

शिवात्सत्यपरानन्दप्रकाशैकस्वलक्षणात्।
आविर्भूतमिदं सर्वं चेतनाचेतनात्मकम्॥

[1]इत्यपादानपञ्चमी श्रुता। सा च "जनिकर्तुः प्रकृतिः" (पा. सू. १-४-३०) इत्यपादानसंज्ञया उपादानवाचिनो विहिता। अतः सैव पञ्चमी तत्र प्रमाणम्। तथा तत्रैव—

सृष्ट्यर्थमैक्षत प्राज्ञो बहुस्यामिति शक्तिमान्॥

इति बहुभवनसङ्कल्पः श्रूयते। स चोपादानत्व एव घटते। न हि निमित्तमात्रस्य कुलालस्य घटः स्यामिति सङ्कल्पोऽस्ति। एवं देवीकालोत्तरे—

भूतानि चाहं स्थिरजङ्गमानि
यावन्ति चान्यान्यहमेव तानि॥

---

[1] इत्युपादानात् प (मै).

इति सामानाधिकरण्येन निर्देशो वर्तते । स च मृद्घट इत्यादावुपादानोपादेययोरेव दृष्टः, न त्वत्यन्तभिन्नयोर्दण्डघटयोरिति सोऽपि प्रमाणम् । तदुक्तं शिवज्ञानबोधे—

अन्य. सन्व्याप्तितो[1] नान्यः . . .

. . . . . . . . . . ॥ इति ॥

(शिव.सू. २).

नन्वेवं निर्विकारत्वप्रतिपादकानि वचनानि व्याहन्येरन्निति चेत्, न; "शिवाच्छक्तिमतः प्रभोः" इत्यादिवचनानुसारेण मायाद्वयाख्यपरिग्रहशक्तिविशिष्टस्य शिवस्योपादानत्वेऽपि विशेषणीभूतमायाया एव विकारित्वात् । विकारित्वेऽपि केवलस्य निर्विकारत्वाविरोधात् । ननु शिवो नोपादानम्, चेतनत्वात्, पशुवदित्यनुमानेन बाधः प्रतिरोधो वा शिवोपादनत्वबोधकागमस्येति चेन्न; आगमस्यानुमानापेक्षया प्रबलत्वेन तस्यैवानुमानबाधकत्वात् । अन्यथा यागादिक्रिया न स्वर्गसाधनम्, क्रियात्वात्, वृथाचेष्टावदित्यनुमानेन यागादिस्वर्गसाधनताबोधकस्याप्यागमस्य बाधप्रतिरोधाद्यापत्तेः । ननु समवायिकारणस्य नानात्व एव तत्संयोगात्मकमसमवायिकारणं लभ्यते । शिवस्य तूपादानत्वे असमवायिकारणं न लभ्यत इति न तस्योपादानत्वं युज्यत इति चेन्न; भावकार्यस्यासमवायिकारणजन्यत्वानियमे मानाभावात् । प्रत्युत तदभावस्यैवोपादानत्वबोधकागमेन निश्चयात्, शब्दादिकार्येऽसमवायिकारणस्याभावेन व्यभिचाराच्च । न च तत्रापि भेर्याकाशसंयोगादिरसमवायिकारणम्; तद्व्यतिरेकप्रयुक्तस्य कार्यव्यतिरेकस्यादर्शनेन तस्य कारणत्वे मानाभावात् । अन्यथा तत्राकाशपरिमाणस्याप्यसमवायिकारणत्वकल्पनापत्तेः; एकतन्त्वारब्धे सूत्रे व्यभिचाराच्च । नच तत्रापि

[1] ऽनन्यः (दे).

तन्त्ववयवानामेवारम्भकत्वम्, तेषां च संयोगः सम्भवतीति युक्तम्; मूर्तानां समानदेशताविरोधे तु तन्तुसमानदेशस्य सूत्रस्य निष्पत्त्ययोगात्। तन्तोरपि सद्भावप्रतीत्या तन्तुविनाशकल्पनाया बाधितत्वात्। एवं च शिवो नोपादानम्, कर्तृत्वात्, कुलालवदित्यनुमानं निरस्तम्। आगमबाधेन तस्याप्यनुत्थानात्। नन्वागमेनापि साक्षादुपादानत्वं न बोध्यते, किं तु तद्व्याप्यत्वम्, कार्येणाभिन्नत्वम्, तल्लयाद्यधिकरणत्वं च। तथा चानयोः सत्प्रतिपक्षत्वमेव स्यादिति नोपादानत्वनिश्चयो युक्तः। न च लयाद्यधिकरणत्वमागमेन बोधितमिति प्रबलमिति युक्तम्; कर्तृत्वस्यापि तेनैव बोधितत्वात्। यदि चागमबोधितस्य कर्तृत्वसम्बन्धिनः पक्षधर्मत्वस्य बाधेन तदीया व्याप्तिर्बाध्यते तदा लयाद्यधिकरणत्वस्य वा कर्तृत्वस्य वा सा बाध्यताम् विशेषाभावात्। तस्मात्सत्प्रतिपक्षत्वमेव॥

अत एव नोपादानत्वनिश्चय इति, मैवम्; पञ्चम्याः प्रकृते प्रकृतित्वरूपोपादानत्वबोधकतया साक्षादेवागमेनोपादनत्वबोधनात्। नन्वेवं शिवो निमित्तं न भवेत्, उपादानासमवायिव्यतिरिक्तकारणस्यैव निमित्तशब्दार्थत्वादिति चेन्न; प्रकृतिभावेनोपादानत्ववदनुकूलचिकीर्षादियोगेन निमित्तत्वस्योपपत्तेः। निमित्तलक्षणमपि प्रकृतिभावादन्यादृशोपयोगवत्त्वम्। तच्च चिकीर्षादिनोपयोगवति शिवेऽप्यक्षतमिति शिव एवोपादानं निमित्तं चेति सिद्धम्॥

नन्वेवम्—

निमित्तमीश्वरस्तेषामुपादानं स बिन्दुराट्॥

(पौ. तन्त्र. प. श्लो. २८)

शिवो निमित्तं प्रकृतिः परापरा

कार्यात्मतामस्य समाप्नुते जडा॥

इत्यादिवचनविरोध इति चेत्, न; एतादृशवचनानां मायावद्विकारितयोपादानत्वं नास्तीत्येवम्परत्वात्। यदपि "बहु स्यामिति शक्तिमान्, यावन्ति चान्यान्यहमेव तानी"त्यादिवचनजातं केवलोपादानत्वमात्रपरं, तदपि "अन्यः सन्व्याप्तितोऽनन्य" इति कार्ये व्याप्तिसत्तालक्षणानुस्यूतिस्फूर्तिपरमिति न कश्चिद्विरोधः॥

एवं च पतिपदार्थशिवस्य तदधिष्ठितमायायाश्च कार्यभूतप्रपञ्चस्य स्वधर्मसत्तास्फूर्तिप्रियादिरूपतया जडविकारादिरूपतया चोभयोरुपादानत्वम्। शिवस्य तु मायाया अधिष्ठातृतया निमित्तत्वमधिकमिति विशेषः। यथा धूमलक्षणे कार्ये आर्द्रेन्धनवह्न्योरुभयोरुपादानत्वेऽपि धूमकार्ये काष्ठधर्मकृष्णरूपमेव; न तु वह्निधर्मभास्वररूपम्; तथा प्रपञ्चस्य शिवमायोभयोपादानत्वेऽपि न चिदानन्दरूपत्वम्। किं तु जडमायाधर्मप्रकाश्यत्वविकारित्वरूपमिति। तत्र च वह्नेरिव शिवस्य निमित्तत्वमिति न तदुत्कृष्टधर्मवत्त्वम्। न च वह्निरपि धूमे निमित्तमात्रम्, न तूपादानमिति वाच्यम्; अन्यस्योपादानस्याभावेन परमाणुप्रक्रियायाश्च पराकरिष्यमाणत्वेन वह्नीन्धनयोरेवोपादानत्वात्। न च काष्ठमेवोपादानं वह्निस्तु निमित्तमात्रमिति वक्तुं शक्यम्। वह्निधर्मभूतौष्ण्यादेरप्युपलभ्यमानत्वेन ग्राहकतौल्यात्। तस्मान्मायाविशिष्टेश्वरस्य निमित्तत्वमुपादानत्वं च सिद्धम्। तदुपपादकवचनानि वातुळे—

लिङ्गे सर्वं समुत्पन्नं लयस्तत्रैव चोच्यते।
लिङ्गं शंभुरिति ज्ञेयं पीठं शक्तिरुदाहृतम्॥
योनिलिङ्गप्रकारेण जगत्सृष्ट्यर्थकारणम्।
सदा संयोगभावत्वात्कामरूपमुदाहृतम्॥
लिङ्गे तु जायते तत्र जगत्स्थावरजङ्गमम्।
तस्माल्लिङ्गं विशेषेण कर्मरूपमुदाहृतम्॥

कर्मोदये तु सृष्टिः स्यात् कर्मान्ते संहृतिर्भवेत् ।
एतत्कर्मेशरूपं तु सृष्टिस्थितिलयावहम् ॥
दक्षिणाङ्गभवो ब्रह्मा हरिः पूर्वाङ्गसम्भवः ।
हृदयान्नीलरुद्रस्तु शिरसश्शिवसंज्ञकः ॥
महेशस्य सहस्रांशाद्रुद्रदेवसमुद्भवः ।
एतन्महेशकोट्यंशाद्ब्रह्मविष्णुसमुद्भवः ।
नेत्रे तु सव्यवामोर्ध्वे सूर्यसोमाग्निसम्भवः ।
प्राणे वायुः समुत्पन्नः श्रोत्रे कीलादिसम्भवः ॥
आस्ये ज्ञानं समुत्पन्नं गणेशस्तद्गळोद्भवः ।
षण्मुखो हृदये जातो नाभौ देवाः समुद्भवाः ॥
पञ्चाशत्कोटिदेवाश्च महेशांशसमुद्भवा ।
ऋषयश्च तथाकोट्यो रोमकूपसमुद्भवाः ॥ इति ॥

ज्ञानं नाम वेदादिविद्या । नन्वेवमपि शिवस्यैव जगत्कर्तृत्वमिति कथं ? त्वयैवानन्तेश्वरादीनामपि कर्तृत्वाभ्युपगमात् ।

कदाचित्सृष्टयः शार्वाः कदाचित्पद्मजोद्भवाः ।
कदाचिदपि वैष्णव्यः कदाचिन्मुनिनिर्मिताः ॥

इति जगतोऽनियतकर्तृत्वश्रवणादिति चेन्नैवम् ; प्रकृतिमायायां सृष्टौ ब्रह्माणमधिष्ठाय तस्यामेव मायायां सृष्टौ पालने च विष्णुमधिष्ठाय पुनश्च तस्यामेव सृष्टिस्थितिसंहारेषु रुद्रमधिष्ठाय अशुद्धमायायां सृष्टिस्थितिसंहारतिरोभावष्वीश्वरमधिष्ठाय कारणत्वेऽपि शुद्धमायायां सृष्टिस्थितिसंहारतिरोभावानुग्रहेषु साक्षात्सदाशिवस्यैव कर्तृत्वम् ॥

नन्वन्यत्र सृष्ट्यादिकार्यत्रयस्यैव ब्रह्मादित्रयस्य कारणत्वमुक्तम् ; न तु पञ्चसु कार्येषु पञ्चेश्वराणामिति चेत्, पञ्चकार्याणां पञ्चेश्वरकर्तृत्वप्रतिपादकानि कामिकाद्यागमवचनानि बहूनि सन्त्येव । वेदोपबृंहितपुराणवचनानि चोच्यन्ते ।

काशीखण्डे—

पञ्चानामपि देवानां ब्रह्मादीनां समाश्रयम् ।

ओङ्कारबोधितं लिङ्गं पञ्चायतनमुत्तमम् ॥ इति ॥

नृसिंहपुराणे च—

आनाभेर्ब्रह्मणो रूपमागळाद्वैष्णवं वपुः ।

आशीर्षाद्रुद्रमीशानं तदग्रे सर्वतःशिवम् ॥ इति ॥

श्रीशंकराचार्यैः सौन्दर्यलहर्यां च—

जगत्सूते धाता हरिरवति रुद्रः क्षपयते

तिरस्कुर्वन्नेतत्स्वमपि वपुरीशस्तिरयति ।

सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिवः

तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥ (सौन्दर्य. श्लो. २४)

इत्युक्तत्वात् सिद्धं पञ्चेश्वराणां पञ्चकार्यकर्तृत्वम् । एवं च स्रष्टुः परमेश्वरस्य चिच्छक्तेः सूक्ष्मशरीरतया परिग्रहाबिन्दुशक्तेः स्थूलशरीरतया स्वदेहप्रवर्तकत्ववत् सृष्ट्यादिप्रवर्तकत्वमवगन्तव्यम् । तदेवं व्यवधानेनाव्यवधानेन वा शिवस्यैव सर्वप्रपञ्चकार्यकर्तृत्वम् । तच्च कार्यं परिणामारम्भसमूहविवर्तवृत्तिभेदेन पञ्चविधम् । तत्र वृत्तिरेव जगत्, न परिणामादिः । तथा हि—न तावज्जगत् परिणामः ; पूर्वावस्थापरित्यागेनावस्थान्तरप्राप्तिर्हि परिणामः । यथा पयसः पयस्त्वावस्थापरित्यागेन दध्यादिरूपप्राप्तिः । न चेह पूर्वावस्थापरित्यागोऽस्ति । नाप्यारम्भः ; यत्र हि नानाकरणैः परस्परसंयोगेनैकं कार्यमारभ्यते तदेवारम्भः । यथा घटादिः । अत्र त्वेकस्या एव मायायाः कारणत्वान्नारम्भपक्षः क्षोदसहः । न च मायाशिवयोः संयोगेनेहाप्यारम्भोऽस्त्वति युक्तत् ; तयोस्तुल्यवदुपयोगाभावात् । माया हि विकारितयोपयुज्यते । तदधिष्ठातृतया तु शिव इति । संयोगस्य चरमकारणत्वेन सर्वदा कार्योपत्तेश्च । अत एव न समूहोऽपि; अनेकेषामेव

लोम्नां चामरादिरूपसमूहदर्शनात्। प्रकृते च तदसम्भवात्। नापि विवर्तः; तस्य अतत्त्वतोऽन्यथाभावात्मकत्वेन जगतोऽत्यन्तासत्त्वप्रसङ्गात्। तस्माद्यथा पटस्य कुटयवस्था अहेश्च कुण्डलावस्था अप्रच्युतपूर्वरूपस्यैवावस्थान्तरप्राप्तिरूपत्वाद्वृत्तिः तथा जगदपि शिवाधिष्ठितशुद्धाशुद्धमाययोर्वृत्तिरेव ॥

अयं च स्वरूपज्ञप्तिविषयः। नात्यन्तमनवभास्यः। नापि प्रमाणभास्यः; तथात्वे तुच्छत्वजडत्वयोः प्रसङ्गात्। न च मनोरूपप्रमाणजन्यज्ञानविषये जीवात्मनि जडत्वाभावेन व्यभिचारः। तस्य प्रमाणजन्यज्ञानविषयत्वे तदभावे प्रकाशासम्भवेन कदाचिदहं वा नाहं वेति संशयस्य नाहमिति विपर्ययस्य च प्रसङ्गेन स्वप्रकाशत्वस्यैवोपेयत्वेन प्रमाणजन्यज्ञानविषयत्वायोगात्। न च प्रमाणागम्यत्वे शिवस्य प्रागुक्तमनुमानागमवेद्यत्वं व्याहन्येतेति युक्तम्; धर्मिणः स्वप्रकाशत्वेऽपि तद्धर्माणां कर्तृत्वोपादानत्वादीनां तद्गम्यत्वेन प्रागुक्तस्यानुमानादिप्रमाणगम्यत्वस्योपपत्तेः। इति सिद्धं शिवस्य स्वप्रकाशत्वम् ॥

इति श्रीमदतिवर्णाश्रमाचार्यवर्यशैवपरिपालकशिवाग्रयोगीन्द्रज्ञानशिवाचार्यविरचितायां शैवपरिभाषायां पतिपदार्थनिरूपणं नाम द्वितीयः परिच्छेदः ॥

---

## अथ तृतीयः परिच्छेदः

---

अथ चिद्रूपतया पत्यनन्यः पशुपदार्थो निरूप्यते । तत्र पशुर्नाम देहेन्द्रियादिव्यतिरिक्तो नित्यश्चिदात्मकोऽनेको विभुरनादिमलावृतोऽस्वतन्त्रः कर्ता च। अत्र देहेन्द्रियादिव्यतिरिक्त इत्यनेन देहेन्द्रियप्राणबुद्ध्यात्मवादानां निरासः । नित्य इत्यनेन क्षणिकात्मवादस्य चिदात्मक इत्यनेन जडात्मवादस्य अनेक इत्यनेन एकात्मवादस्य विभुरित्यनेनाणुपरिमाणमध्यमपरिमाणात्मवादयोः अनादिमलावृतोऽस्वतन्त्र इत्याभ्यां आत्मेश्वरवादस्य च व्यावृत्तिः । कर्तेत्यनेन साङ्ख्यात्मवादनिरासः । तथा चोक्तम्—

अत सातत्यगम्ने व्युत्पन्ना ज्ञस्वभावतः ।
परामर्शात्मका[1]स्तऽता गतेर्ज्ञानार्थता यतः ॥
आत्मानो व्यापिनोऽनन्ताश्चिद्रूपाः पशवस्त्रिधा ॥ इति ॥

श्रीमन्मृगेन्द्रे च—

नाव्यापको न क्षणिको नैको नापि जडात्मकः ।
नाकर्ता भिन्नचिद्योगी पाशान्ते शिवताश्रुतेः ॥ इति ॥

(मृ. प्र. ६. श्लो. ७)

श्रीमत्पराख्ये च—

देहान्योऽनश्वरो व्यापी विभिन्नः समलोऽजडः ।
स्वकर्मफलभुक्कर्ता किञ्चिज्ज्ञः सेश्वरः पशुः ॥ इति ॥

(पराख्यं. पशु. प. श्लो. १५)

ननु कथमात्मनो देहव्यतिरिक्तत्वम्? देहस्यैवात्मत्वात् । तथा हि—यद्यस्मिन् सत्येव दृश्यते तत्तस्य कारणं दृष्टम्। तथा च

---

[1] द्वेतोर्गते (मै)

चतुर्विधभूतपरिणामाद्देहाच्चैतन्यं स्वत एवोत्पद्यते किण्वाद्यणुशक्त्या मदरूपविचित्रकार्यवत्। तस्माद्भूतात्मकाद्देहादेव चैतन्यसम्भवः। तच्चैतन्यमधिष्ठातुमात्मा ईश्वरश्च नापेक्षणीयः। अत एव स्थूलोऽहं कृशोऽहमित्यादिसामानाधिकरण्यप्रत्ययोपपत्तिः। मम देहोऽयमित्यादिप्रत्ययस्तु राहोः शिर इत्यादिवदौपचारिकः; तस्माद्देहातिरिक्त आत्मा नास्तीति चेन्मैवम्। न वयं कारणशक्तिभिः कार्याणां वैचित्र्यं नेति ब्रूमः; किं तु विरुद्धात्कारणाद्विरुद्धं कार्यं नोत्पद्यत इति। तथा च जडाद्देहात् कथं प्रकाशरूपचैतन्यसम्भवः। किं च गुणस्य नाशो गुणिनाशाद्विरोधिप्रादुर्भावाद्वा भवति। इह तु मृते देह उभयाभावेऽपि कथं तद्गुणभूतचैतन्यनाशः; देहारम्भकभूतैकदेशप्राणवायुनिर्गमादिति चेन्न; सुप्तौ तत्सद्भावेऽपि ज्ञानानुपलब्धेः। न च करणोपरमात्तदानीं चैतन्यानुपलब्धिरिति वाच्यम्, त्वन्मते करणोपरतिहेतुकर्माभावेन सुप्तावपि चैतन्योदयप्रसङ्गात्। तस्माद्यत्सद्भावे देहस्य चेष्टा, यदभावे तदभावः तच्चैतन्यं देहव्यतिरिक्तं आत्मत्वेनेष्टव्यम्। किं च बाल्ययौवनवार्धकेषु शरीरस्य भेदेन बाल्ये कृतस्य कथं वार्धके प्रतिसन्धानम्। तस्माद्देहात्मवादः प्रत्यक्षेणैव निराकृतः। अत एव मम देहोऽयमित्यादिप्रत्ययदर्शनम्। स्थूलोऽहमित्यादिप्रत्ययस्त्वौपचारिकः। किं च निर्दोषेन्द्रियार्थसन्निकर्षेऽप्यर्थग्रहो न दृश्यते। तत्कस्य हेतोः? व्यासक्तत्वादिति चेत्, हन्त! तर्हि चित्तव्यासङ्गप्रयोजकः सूक्ष्म आत्मा अभ्युपेयः। एतच्च प्रतिपादितं श्रीमत्पौष्करपराख्ययोः—

चैतन्यदर्शनाद्देहे नात्मा चैतन्यको भवेत्।
यद्यस्मिन् सति सन्दृष्टं तदिष्टं तस्य कारणम्॥
कारणत्वाविशिष्टोऽत्र देहश्चैतन्यसाधकः।
शरीरघटयोर्योगात् सुरापूपाख्यकार्ययोः॥

कारणं गुडपिष्टादिरविशिष्टोऽपि दृश्यते ।
अपूपादसती पूर्वं मदशक्तिस्तदात्मनि ॥
तस्माद्भूतात्मकादेव देहाच्चैतन्यसम्भवः ।
तच्चैतन्यमधिष्ठातुं किमन्येनात्मनेश्वर ॥

ईश्वरः—

केनोक्तं भिन्नकार्याणां वैचित्र्यं नेति शक्तिभिः ।
विरुद्धात्कारणात्कार्यं विरुद्धं नोपजायते ॥
विरुद्धमपि चैतन्यं जडाद्देहात्कथं भवेत् ।
किं च यस्य तु यो धर्मस्तन्नाशाद्धर्मनाशनम् ॥
विरोधिगुणसद्भावादथ स्यादन्यथा द्विजाः ।
देहे सत्यपि चैतन्यं मृते किमिति नेष्यते ॥
यद्भावयदभावाभ्यां चेष्टाचेष्टे भजेत्तनुः ।
तच्चैतन्यमिति प्रोक्तं व्यतिरिक्तं तु देहतः ॥
किं च बाल्ये च वार्धक्ये यौवने च विभेदतः ।
शरीरस्यानुसन्धानं कथं बाल्ये कृतस्य च ॥
स तावदनुसन्धत्ते प्राग्भुक्ता सेयमङ्गना ।
इति तस्माच्छरीरात्मवादोऽध्यक्षनिराकृतः ॥
तस्मात्स्थूलोऽहमित्यादिर्ज्ञेयो राहोः शिरो यथा ।
किं च देहो ममेत्यादिप्रत्ययोऽस्त्येव पुष्कलः ॥ इति ॥

(पौ. पशु. प. श्लो. ६१-७

भूतानां समुदायेऽपि देहस्याध्यवसायतः ।
वस्तुग्रहे प्रवृत्तस्य संशुद्ध लोचनेऽपि च ॥
न यतोऽर्थ[1]ग्रहे बाह्ये योऽभिप्रेतोऽन्यचेतसः ।

---

[1] ग्रहो ह्यस्य (दे).

[1] अतोऽस्त्यन्यः पुमानस्मिन् यो जातः शून्यमानसः ॥
दृष्टा बाल्यादिकावस्था तावद्देहे चतुर्विधा ।
परिणामविशेषेण या विभिन्ना पृथक् पृथक् ॥
अन्यां यां योऽनुसन्धत्ते तामवस्थां गतामपि ।
सोऽस्मिन्स्मर्ता स्मृतिर्ज्ञानं भिन्नं भूताक्षनिर्गतम् ॥ इति ॥
(पराख्यं. पशु. प. श्लो. १९-२०-२२-२४)

नन्विन्द्रियाणि ज्ञानहेतव इत्यन्वयव्यतिरेकसिद्धम् । अतो ज्ञातृत्वमपि तेषामेवास्तु । ज्ञात्रन्तरकल्पनायां गौरवात् । नचेन्द्रियाणां नानात्वेन गुणप्रधानभावाभावेन च युगपद्विरुद्धव्यापाराः प्रसज्येरन्निति वाच्यम् । स्वतो गुणप्रधानभावाभावेऽप्येकस्मिन् देहे विद्यमानानां तेषामेकग्रामवासिनामिव कार्यानुरोधेन गुणप्रधानभावोपपत्तेः । मास्तु वा गुणप्रधानभाव इन्द्रियाणाम् । तथापि युगपद्विरुद्धव्यापाराभाव उपपद्यते । मनोरूपसहकारिसाहित्येन प्रबलस्य व्यापारोपपत्तेः । न च तेषां करणत्वान्न कर्तृत्वमिति वाच्यम् । करणत्वस्यास्माभिरनभ्युपगतत्वेनान्यतरासिद्धत्वात् । न च रूपाद्युपलब्धिकरणत्वेनैव तेषां सिद्धेर्नासिद्धिरिति युक्तम्; सहेतुकत्वानुमानेन तेषां सिद्ध्युपपत्तेः । तस्मान्मूकोऽहं बधिरोऽहमित्याद्यनुभवानुसारेणेन्द्रियाण्येवात्मेति, मैवम् । इन्द्रियाभावेऽपि स्वप्नादौ ज्ञानोपलम्भेन तेषां ज्ञातृत्वायोगात् । किं च श्रोत्रादीनीन्द्रियाणि प्रतिनियतविषयाणि, आत्मा तु सर्वग्राहक इत्यनुभवसिद्धम् । अतस्तैः शब्दादिसर्वविषयग्राहक आत्मा अन्योऽभ्युपगन्तव्यः । किं चेन्द्रियाण्यपि प्रेर्याण्यनुभूयन्ते । न च स्वतन्त्रस्यात्मनः प्रेर्यत्वमस्ति, अतो न तेषामात्मत्वं सम्भवति । अपि च श्रोत्रादीनि न स्वरूपं जानन्ति । आत्मा

[1] अतोऽप्यन्यः पुमानस्ति (दे).

तु श्रोत्रादिस्वरूपं जानाति । अतो विरुद्धधर्मयोगित्वान्न श्रोत्रादिरात्मा । किं च योऽहं चक्षुषा घटमद्राक्षं सोऽहमिदानीमान्ध्यदशायां तमेव त्वचा स्पृशामीति प्रत्यभिज्ञानमुपलभ्यते । तदिन्द्रियाणामात्मभावे न युज्यते । अन्येनोपलब्धेऽन्यस्य प्रत्यभिज्ञानाभावात् । किं चेन्द्रियाणामात्मत्वे युगपद्विरुद्धव्यापारयोगप्रसङ्गः । न चैकग्रामवासिनामिव कार्यानुरोधेन तेषां गुणप्रधानभावादीति पूर्वोक्तं युक्तम् । असाधारणकार्ये तेषामपि गुणप्रधानभावाभावात् । न च वरगोष्ठीन्यायेन गुणप्रधानभावः । युगपत्स्वस्वभोग्यप्रत्यासत्तिरहितेष्वेव तन्न्यायप्रवृत्तेः । वरेषु ह्येकस्य स्वभोग्यसन्निधाने तद्रहितानामितरेषां गुणभावाभ्युपगमो युज्यते । इन्द्रियेषु युगपत्स्वस्वविषयसन्निकृष्टेषु नैकस्यापि गुणप्रधानभावाभ्युपगमः सम्भवति । तस्मान्न वरगोष्ठीन्यायेनापि गुणप्रधानभावः । नापि मनस्साहित्यप्राबल्यात्कृतो व्यापारयोगः । एकत्र मनस्साहित्यमित्यस्यैव त्वन्मतेऽयुक्तत्वात् । मन्मते हि स्वतन्त्र आत्मा स्वाभिमतग्राहिणीन्द्रिये मनो निवेशयतीति युक्तमेकस्यैव साहित्यम् । त्वन्मते तु इन्द्रियाण्येव स्वतन्त्राणि । तत्परतन्त्रं मनः । न च प्रधानानां तेषां वैमत्ये गुणभूतस्यैकत्रागमनं युक्तम् । न चेन्द्रियमेव मनः समाकर्षति । विनिगमकाभावात् । तस्मादिन्द्रियाणामात्मत्वे युगपद्विरुद्धव्यापारप्रसङ्ग एव । तस्मान्नेन्द्रियाण्यात्मा ॥

अस्तु तर्हि प्राणवायुरात्मा; अहं जीवामीत्यनुभवात् । न चैकस्मिन्देहे प्राणापानादिभेदेनात्मभेदप्रसक्तौ रुचिभेदेन युगपद्विरुद्धव्यापारयोगः स्यादिति युक्तम् । एकस्यैव व्यापारभेदेन प्राणादिसंज्ञाभेदोपपत्त्या प्राणापानादिभेदे मानाभावात् । न च सुषुप्त्यादावपि प्राणादीनां सत्त्वेन ज्ञातृत्वं स्यादिति युक्तम् । इन्द्रियव्यापारविरहेण तद्विरहस्योपपत्तेः । तस्मात्प्राणवायुरेवात्मेति मैवम् । प्राण-

वायोरपि देहवन्नियम्यत्वानुभवेन तन्नियामकस्य कस्यचित्परस्या-वश्याभ्युपगन्तव्यत्वात्। न च देहादिरेव कार्यनियन्ता। आत्मत्वेनाभ्युपगतस्य तस्य देहनियामकतया तन्नियम्यत्वायोगात्। वायुविशेषगुणस्य सति तस्मिन् ध्वंसायोगेन स्वापेऽपि तस्य ज्ञातृत्व-प्रसङ्गाच्च। न चान्तःकरणवर्गस्यात्मत्वम्। तस्याचेतनतया तन्नियम्यत्वात्॥

नन्वस्तु ज्ञानसन्ततिरात्मा। न च ज्ञानस्य भेदाभावेन सन्तत्ययोगः। घटपटादिज्ञानभेदस्य प्रत्यक्षसिद्धत्वात्। अथ सन्तानि-व्यतिरेकेण सन्तानाभावात् सन्तानिनामात्मत्वं वाच्यम्। तच्च न सम्भवति। अन्यानुभूतेऽन्यस्यानुसन्धानाभावेन प्रत्यभिज्ञाद्यभाव-प्रसङ्गात्। अथ कथं क्षणिकविज्ञानस्यात्मत्वमिति, नैवम्। सन्तानैक्यवशेन प्रत्यभिज्ञाद्युपपत्तेः। यत्सन्तानप्रविष्टस्य हि ज्ञान-स्यानुभवितृत्वं तत्सन्तानपतितस्य प्रत्यभिज्ञातृत्वम्। न च सन्ता-नस्यान्यस्याभावेन कथमैक्यमिति युक्तम्। वृक्षातिरिक्तस्य वनस्या-भावेऽपि वनत्वस्य व्यासज्यवृत्तित्वेनैकं वनमितिवत् सन्तानत्वस्यापि व्यासज्यवृत्तितया सन्तानैक्योपपत्तेः। तस्मात्क्षणिकविज्ञानमेवा-त्मेति। अत्र प्रतिविधीयते। सुषुप्तौ तावज्ज्ञानसन्तानविच्छेदस्तवापि सम्मतः। अन्यथा तत्कालीनजन्यस्मरणादिप्रसङ्गात्। एवं च यत्पूर्वेद्युर्मया दृष्टं तदेवेदमिति प्रत्यभिज्ञा कथं स्यात्। पूर्वज्ञान-सन्तानस्य सुषुप्तौ विच्छेदेन सन्तानैक्यस्याप्यभावात्। ननु सन्तानैक्यं मास्तु प्रयोजकम्। देहैक्यं तु भविष्यति। यद्देहसम्बन्धि ज्ञानमनुभवितृ, तत्सम्बन्ध्येव ज्ञानं प्रत्यभिज्ञात्रिति व्यवस्थोपपत्ते-रिति चेन्न। त्वन्मते देहस्यापि क्षणिकत्वेन तदेकत्वस्याप्यभावात्। अथ देहसन्तानैक्यं प्रयोजकमिति मन्यसे; एवमपि बालस्याऽऽद्यप्रवृ-त्त्यनुकूलजन्मान्तरानुभूतस्मरणादेरनुपपत्तेः। तत्र देहसन्तानैक्यस्याप्य-

भावात्। अत एव जन्मान्तरकृतकर्मफलभोक्तृत्वमपि न स्यात्; अन्येन कृते कर्मण्यन्यस्य फलभोगासम्भवात्। ज्ञानसन्तानैक्यस्य देहसन्तानैक्यस्य वा तन्त्रोक्तृताप्रयोजकस्याभावात्॥

नन्वनुभवितुः प्रत्यभिज्ञातृत्वं कर्तुश्च फलभोक्तृत्वं क्व दृष्टम्? येन स्थायितया आत्मा स्वीकर्तव्यः स्यात्। न च स्थायित्वसिद्धेः पूर्वमैक्यस्य प्रयोजकत्वं भवता ज्ञातुं शक्यते। अतः परस्पराश्रयत्वमत्रेति चेन्न; देवदत्तादन्यस्य यज्ञदत्तादेस्तदनुभूतस्मर्तृत्वस्य तत्कृतकर्मफलभोक्तृत्वस्य चादर्शनेनैक्यस्य प्रयोजकत्वकल्पनायां स्थायित्वसिध्द्युपपत्तेः॥

ननु सर्वस्यापि क्षणिकत्वान्न स्थायित्वमात्मनः सम्भवति। तथा हि—एकस्य कालद्वयसम्बन्धो हि स्थायित्वम्। स च न सम्भवति; एककालसम्बन्धस्यापरकालसम्बन्धाभावेन व्याप्तत्वात्। नीलस्य पीतत्वाभावेन व्याप्तिग्राहकस्य सहचारग्रहादेः सत्त्वात्। स्थायिनोऽर्थक्रियाकारित्वरूपस्य सत्त्वस्यायोगेन सतः क्षणिकत्वावश्यम्भावाच्च। तथा हि—स्थायिनोऽर्थक्रियाकारित्वं क्रमेण युगपद्वा? नाद्यः। तस्य तावदर्थक्रियाजननसामर्थ्ये समर्थस्य विलम्बायोगेन क्रमायोगात्। असामर्थ्ये तु सुतरां क्रमासम्भवात्। न च समर्थस्यापि कालान्तरेऽपि न तज्जनकत्वमिति सहकारिसन्निधानानुसारेण क्रमेण कार्यजनकत्वं सम्भवतीति युक्तम्। सहकारिणामतिशयानाधायकत्वेऽसहकारिभ्यो विशेषाभावेनाजनकत्वात्। अतिशयाधानाभ्युपगमे अतिशयस्य बीजाद्यपेक्षयाऽतिरेकेऽनवस्थाप्रसङ्गात्। अनतिरेकेऽङ्कुरजनकस्य बीजस्य तत्कालोत्पत्तिकत्वाङ्गीकारेण क्षणिकत्वाभ्युपगमप्रसङ्गात्। नापि द्वितीयः; युगपत्तावत्कार्योत्पादनसमर्थस्य क्षणान्तरेऽपि सत्त्वे तदापि तावत्कार्योत्पत्तिप्रसङ्गात्। क्षणान्तरेऽसद्भावे त्वस्मन्मतप्रवेशात्। तस्मात्सर्वस्यापि क्षणिकत्वमेव। न चैवं स एवायं

घट इति प्रत्यभिज्ञानुपपत्तिः; तस्याः तत्सादृश्यविषयकत्व-कल्पनात्। स एवायं दीप इत्यादौ तथा दर्शनात्। तस्मान्न स्थायित्वमात्मन उपपद्यत इति चेन्नैवम्। प्रत्यभिज्ञाया ऐक्यविषयत्वसम्भवेन सादृश्यविषयकत्वकल्पनस्यायुक्तत्वात्। न चोक्तयुक्त्या ऐक्यविषयकत्वासम्भवः; एकस्यापि वृक्षस्य कपिपुरुषादिनानासम्बन्धवन्नानाकालसम्बन्धोपपत्तेः, स्थायिनोऽपि सहकारिसान्निधानानुरोधेन क्रमिककार्यजनकत्वोपपत्तेश्च। न चातिशयानाधायकत्वे सहकारित्वानुपपत्तिः; तथात्वेऽप्यन्वयव्यतिरेकादिना सहकारित्वोपपत्तेः। तस्मान्न क्षणिकज्ञानरूप आत्मा। तदुक्तं श्रीमत्पौष्करे—

ऋषयः—

यद्यज्ज्ञानं भवेत्सर्वं न तच्चिच्छक्तिसम्भवम्।
तत्सर्वं बौद्धमेष्टव्यं विनाशित्वेन हेतुना॥

ईश्वरः—

तन्न बुद्धेर्जडत्वेन ज्ञानोत्पादकता कुतः।
अभिव्यञ्जकसम्बन्धात्कादाचित्कतया चितः॥

क्षणिकत्वं तु नित्याया अपि सद्योऽनुभूयते।
यावद्दीपः स्थितस्तावत् पदार्थानां प्रकाशकः॥

अभिव्यञ्जकहेतूनां सन्तत्यैव प्रवृत्तितः॥

धारावाहिकधीश्चापि क्षणिकैवानुभूयते।
अत एव हि भावानां क्षणिकत्वेन संविदः॥

क्षणिकत्वं ब्रुवाणानामाशापीडा निवारिता।

ऋषयः—

सत्त्वेन क्षणिकाभावो नेष्यते किमितीश्वर॥

अर्थक्रियाकारिता हि सत्ता सा क्षणिकेषु च ।
क्रमाक्रमविभागाभ्यां स्थिरेषु तदयोगतः ॥
विळम्बकारणायोगात्तथा स्थैर्यक्षतेरपि ।
अलं स्वतोऽसमर्थस्य सहकारिशतैरपि ॥
अर्थक्रियाकरत्वेन क्षणिकत्वमवस्थितम् ।

ईश्वरः—

क्षणिकत्वे पदार्थानां कार्यकारणताक्षतिः ॥
कार्यकारणरूपेण भवत्कारणतां व्रजेत् ।
वर्तमानघटत्वेन मृत्पिण्डः कुम्भतां व्रजेत् ॥
अतः [1] क्षणद्वयस्थायी कार्योत्पत्तौ तु कारणम् ।
तयोरर्थान्तरत्वेन तदुत्पत्तौ तु कारणम् ॥
अन्यथा समकालोऽपि भावः कस्मान्न कारणम् ।
द्वयोरर्थान्तरत्वेन कालभेदः कथं तयोः ॥
कारणस्य कुतस्त्यो वा विशेषः सहकारितः ।
कुतो वा घटनिष्पत्तिस्तन्तुभ्यो न भवेद्द्विजाः ॥
कार्यकारणभावोऽतः स्थिरेष्वेव व्यवस्थितः ।
अर्थक्रियाकरत्वं च स्थायिनां क्रमशः स्थितम् ॥
समर्थस्य सदा कार्यकरत्वनियमेन च ।
अग्निर्दाहसमर्थोऽपि स्फोटेऽङ्गुलिमपेक्षते ॥
क्रमाक्रम[2]विभागाभ्यां दुराशा क्षणिकत्वधीः ।
किं च प्रागनुभूता या धीः सेयमुपजायते ॥
क्षणिकत्वे कुतस्तस्याः प्रत्यभिज्ञा हि जायते ।
क्षणिकत्वं पदार्थानामथ वास्तु जडात्मनाम् ॥

---

1 क्षणान्वयी स्थायी—अ. 2 विकल्पाभ्यां—अ.

कारणत्रयमात्र यत् सर्व[1]कार्येष्वपेक्ष्यते ।
बिन्द्वादयोऽपि ये भावाः समानपरिणामिनः ॥
ज्ञानमेव स्थिरं नित्यं जडवर्गस्य [2]दीपकम् ।
तस्य क्षणिकता ज्ञेया वस्तूनां क्षणिकत्वतः ॥ इति ॥

(पौ. पुंस्त्व. प. श्लो. २१४-२३२)

**श्रीमत्पराख्ये च—**

क्षणभङ्गे स्थिते ज्ञाने कस्य कर्मार्जनं भवेत् ।
न तत्कर्मफलं भोग्यं ज्ञाननाशे निरन्वये ॥
* या त्वया वासना प्रोक्ता किं नाविच्छिन्नलक्षणा ।
भिन्नरूपा यदा सा न तत्क्षणान्तर्गता भवेत् ।
तत्क्षणेन विनष्टेन सा विनष्टा भवेत्ततः ।
अविच्छिन्ना स्थिरा चैका नानाज्ञानसमाश्रया ॥
[3] श्रुत्या विचारिता युक्तया नात्मनो व्यतिरिच्यते ।
जन्मान्तराङ्गसंयोगे शोकहर्षादिहास्यतः ॥
जातिसंस्मरणेऽप्येवं प्राक्तनानुभवादितः ।
† स्थिरत्वं तत्स्मृतेर्गम्यं स्मृतिर्नानुभवादृते ॥
स्मर्तानुभविता स्थैर्यात्तेन ज्ञाता स्थिरो विभुः ॥ इति ॥

(परा. प्र. प. श्लो. ३०-३५)

---

1 कार्येषु कल्पते—अ    2 दीपवत्—अ.    3 तथा—अ.

* अत्र हस्तलिखितपराख्यपुस्तके—

प्रतोद उवाच—पूर्वमेव समारब्धा केन वा कर्मवासना ।
व्यज्यते सा व्यवस्था या . . . लपुष्पात्तरागवत् ॥

प्रकाश उवाच—इत्याधिकः पाठो दृश्यते ।

† अत्र हस्तलिखितपुस्तके—

देशान्तरेवसन्नस्य बन्धोः संस्मरणे यथा ।
इत्याधिकः पाठो दृश्यते ।

न चैवमात्मा क्षणिकविज्ञानयोगी। ज्ञातृत्वस्य नित्यात्मधर्मत्वात्। न हि लोके नित्योऽनित्यधर्मा दृष्टः। किं च तच्च ज्ञातृत्वं विभ्वात्मधर्मत्वाद्विभु, न काचित्कम्। अत एवात्मा सर्वार्थदृक्क्रियः। यदि त्वस्य ज्ञातृत्वं काचित्कं स्यात् तस्यात्मनो विभुत्वं भज्येत। लोके हि धर्मिणो यावती व्याप्तिस्तावती धर्मस्यापि व्याप्तिर्दृश्यते। यथा पटगतं शौक्ल्यं पटमखिलं व्याप्य तिष्ठति। एवमात्मानमपि ज्ञातृत्वं व्याप्य तिष्ठति। न च विषयासन्निधाने ज्ञानस्यानुदय इति वाच्यम्। स्वरूपस्यैव विषयत्वात्। तदुक्तं श्रीमत्पौष्करे—

ज्ञातृत्वमपि तन्नित्यं धर्मत्वान्नित्यवस्तुनः।
नानित्यधर्मा धर्मी स्यान्नित्य आत्मा मुनीश्वराः॥

तच्चेह विभुधर्मत्वान्न च काचित्कमिष्यते।
[1]नित्यत्वमिव तेनात्मा स्थितः सर्वार्थदृक्क्रियः॥

ज्ञातृत्वमपि यद्यस्य काचित्कं विभुता कुतः।
धर्मिणो यावती व्याप्तिस्तावद्धर्मस्य च स्थितिः॥

यथा पटस्थितं शौक्ल्यं पटं व्याप्याखिलं स्थितम्।
स्थितं व्याप्यैवमात्मानं ज्ञातृत्वमपि सर्वदा॥
न च निर्विषयं ज्ञानं परापेक्षं स्वरूपतः॥ इति॥

(पौ. पशु. प. श्लो. १००-१०४)

नन्वात्मनो व्यापकत्वे सिद्धे तद्धर्मस्य व्यापकता सिद्ध्येत्। न च तत्सम्भवति। देहादन्यत्रानुपलम्भेनात्मनो व्यापकत्वायोगात्। तत्राणुपरिमाण एवात्मेति पाञ्चरात्रा वर्णयन्ति—

वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते॥ इति॥

(श्वेताश्वतर-अध्याय ५. मन्त्रः ९)

---

1 नित्यत्वमपि—अ.

क्षपणकास्तु प्रदीपप्रभावत्सङ्कोचविकासवानात्मा देहानुरूप-[1]परिमाणवानिति वर्णयन्ति। पक्षद्वयमपि न सङ्गच्छते। आत्मा विभुः, देहादन्यत्र स्थितार्थग्राहकत्वात्, यन्नैवं तन्नैवं यथा घटः। किं च आत्मा विभुः, सर्वत्रोपलभ्यमानकार्यत्वात्, इति व्यापकत्वसिद्धेः। किं च मध्यमपरिमाणत्व आत्मनो नित्यत्वं न स्यात्। यन्मध्यमपरिमाणं तदनित्यम्, यथा घट इत्यनुमानात्। तस्माद्व्योमवद्व्यापक आत्मा। तद्धर्मभूतमपि ज्ञानं व्यापकम्। तस्मात्प्रत्यक्षत एव निरस्तो वैशेषिकात्मवादः॥ तथा चोक्तं श्रीमत्पौष्करे—

ऋषयः—

व्यापकत्वे ह्यणोः सिद्धे धर्मव्यापकता भवेत्।
अन्यत्रानुपलब्धस्य देहाद्व्यापकता कुतः॥

ईश्वरः—

न देहपरिमाणत्वमणूनामुपपद्यते।
तस्माद्देहादतोऽन्यत्र स्थितार्थग्राहकत्वतः॥
किं चाभिव्यञ्जको यत्र यत्र देहेन्द्रियादिकम्।
तत्र सर्वत्र तत्कार्यदृष्टेर्व्यापकतात्मनः॥
व्यापकोऽयममूर्तत्वाद्यथा व्योम ततस्तथा।
तद्धर्मभूतं ज्ञानं च व्यापकं विषयोन्मुखम्॥
यन्नित्यरूपं विज्ञानं तच्च निर्विषयात्मकम्।
पक्षोऽध्यक्षनिरस्तोऽयं स्वपरग्राहकत्वतः॥
अणोः प्रत्यात्मसिद्धत्वान्नानुमाध्यक्षबाधिका।
नेह ग्राहकता बुद्धेः साधितत्वाज्जडत्वतः॥
किं चैतद्ग्राहकत्वं च न भेदादात्मनां स्थितम्।
स्वरूपं तु ततस्तेषां ग्राहकत्वेन संस्थितेः॥

---

[1] परिणाम (दे).

न ह्यंशेन पदार्थानां विचारः शोभते क्वचित् ।
अग्निरशक्तिं विना कीदृगिति चिन्ता न कुत्रचित् ॥
स्वपरग्राहकस्तस्मात्सर्वदात्मा व्यवस्थितः ॥ इति ॥

(पौ. पशु. प. श्लो. १०५-११३).

अन्यत्र—

व्यञ्जकं यत्र यत्र स्याच्छरीरं तत्र तत्र तु ।
भोगार्थं स्याद्गुणव्यक्तिर्व्यापित्वं तेन गम्यते ॥ इति च ।

न च साङ्ख्योक्तरीत्या आत्मनामज्ञातृत्वम्; तेषामर्थग्राहकत्वस्य दर्शनात् । न च वाच्यमात्मनो ज्ञप्तिमात्रत्वेऽपि महत्तत्त्वापरपर्यायस्य बुद्धितत्त्वस्य ज्ञातृत्वमिति । तस्य जडत्वेन ज्ञानाभिव्यञ्जकत्वात् । किं च आत्मा स्वपरप्रकाशकोऽनुभूयते । परप्रकाशकत्वं च ज्ञातृत्वमात्मन एव गुणः । न च बुद्ध्या ऐक्यमापन्नस्यात्मनो ज्ञातृत्वमिति वाच्यम् । बुद्ध्यैक्यसाधकस्याध्यासस्यैवासिद्धेः । किंचाध्यासस्यापि परत्र पूर्वदृष्टावभासत्वेनात्मव्यतिरिक्तस्य ज्ञातृत्वं वक्तव्यम् । तच्च न सम्भवति । बुद्धेर्जडत्वेन ज्ञातृत्वाभावस्योक्तत्वात् । अथ चित्प्रतिबिम्बवत्वेन बुद्ध्यादेर्ज्ञातृत्वं, तर्हि बुद्धिरपि चेतना स्यात् । किं च चिद्रूपस्य प्रतिबिम्बनमेव न सम्भवति । बुद्धेर्हि परिणामिनो जडस्य प्रतिबिम्बनम् । तस्मात् बुद्धावात्मनः प्रतिबिम्बनं वक्तुं न युज्यत इत्यध्यासेनात्मनः कर्तृत्वं बुद्धिपरिकल्पितम् । तथा चोक्तं श्रीमत्पौष्करे—

ज्ञाता चायं न तु ज्ञप्तिमात्रोऽर्थग्राहको यतः ।

ऋषयः—

ज्ञप्त्यात्मैवायमुद्दिष्टो ज्ञातृत्वं महतो मतम् ॥
महानध्यवसायात्मा तन्त्रेऽप्यस्मिन्महेश्वर ।

ईश्वरः—

सर्वे ज्ञातार एवेह दृश्यन्ते प्राणिनः सदा ॥
न बौद्धमतज्ज्ञातृत्वं युक्तं तस्या जडत्वतः ।
किं तु (च) बुध्यादिभिर्ज्ञानं व्यज्यतेऽत्र सदैव हि ॥
किं चानुभूयते ह्यात्मा स्वपरात्मप्रकाशकः ॥
परप्रकाशकत्वं च नित्यं नित्यगुणो यतः ।
ज्ञातृत्वं नैतदध्यासकृतं भवितुमर्हति ॥
अन्यत्र दृष्टधर्माणामन्यत्राध्यास इष्यते ।
आत्मेतरस्य ज्ञातृत्वासिद्धेर्नाध्यास इष्यते ॥
अथ चित्प्रतिबिम्बेन बुद्ध्यादेर्ज्ञातृता भवेत् ॥
तर्हि चित्प्रतिबिम्बेन बुद्ध्यादिरपि चिद्भवेत् ।
न चेतनो यतो बुद्धौ चिद्रूपः प्रतिबिम्बितः ।
न चाय प्रतिबिम्बोऽपि चिद्रूपस्यात्मनो मतः ॥
जडे जडस्य सङ्क्रान्तिर्युज्यते परिणामिनः ।
बुद्ध्यादेः प्रतिबिम्बोऽपि न स्यादात्मन्यसम्भवात् ॥
अन्योन्याध्यासवादोऽयं कुदृष्टिपरिकल्पितः ॥ इति ॥

(पौ. पशु. प. श्लो. ९१-९९)

नन्वात्मभेदे किं मानं? प्रत्यक्षमिति चेन्न; तस्यामूर्तद्रव्यत्वेन बाह्येन्द्रियाविषयत्वात् । नाप्यहं सुखी अहं दुःखीत्यादिमानसप्रत्यक्षेणात्मभेदासिद्धिः । तत्प्रत्ययस्य भेदप्रयोजकत्वाभावात् । न च आत्मानः परस्परं भिन्नाः, परस्परविरुद्धधर्माश्रयत्वात्, दहनतुहिनवदित्यनुमानं मानमिति वाच्यम्; परस्परविरुद्धधर्माणां तदवच्छेदकोपाधिपरिकल्पिततया आत्मनिष्ठत्वाभावाद्धेतोरसिद्धेः । न ह्येकस्मिन् घटाकाशे रजोधूमादिभिर्युज्यमाने मठाकाशादयोऽपि युज्यन्ते । तस्मात्परिदृश्यमानस्य भेदस्यौपाधिकतयाऽऽत्मभेदः कथमिति चेत्

उच्यते—आत्मानो भिन्नाः, परस्परविरुद्धजन्ममरणादिधर्मवत्त्वात्, [1]यदेवं तदेवं, यथा घटपटादि। न चात्मनां जन्माद्यभावेन हेतोरसिद्धिः। देहादेरेव जन्माद्युपगमे तत्र चैतन्यमेव न दृश्यते। अतश्चैतन्ययुक्त एव देहादिरुत्पद्यते॥

ननु नित्यस्य चैतन्यस्य कथमुत्पत्तिः? यथा तव नित्यानां देहेन्द्रियादीनामुत्पत्तिस्तथाऽऽत्मनोऽपि सम्भवति। अथैवंरूपेण देहेन्द्रियादयो न नित्याः, किं तु कारणात्मनेति ब्रूषे तदा ममाप्यात्मानोऽवच्छिन्नरूपेणोत्पत्त्यादिमन्तः, अनवच्छिन्नास्तु नित्या इति सिद्धमुत्पत्तिलयधर्मकत्वमात्मनाम्। ननु यथा उत्पत्त्यादयो धर्माः कुम्भकलशादिध्वनादीनां, न तु तदवच्छिन्नस्याकाशस्य। एवमुत्पत्त्यादयो धर्मा देहादीनामेव। न तु तदवच्छिन्नस्यात्मन इति चेन्न; आत्मधर्मस्यैव भोजनगमनादिविषयकस्येच्छादेर्भिन्नत्वेनैवात्मभेदसिद्धेः। न च तस्याप्यौपाधिकत्वम्; "तस्यात्मनो रूपं दृक्क्रियानन्त्यलक्षणमि"ति लक्षणाभिधानात्। न च भिन्नतया मेयत्वेनात्मनां मातृत्वं न सिद्ध्येदिति वाच्यम्। मेयत्वमातृत्वयोर्विरोधाभावात्। अन्यथा आत्मनां मेयत्वायोगेन शिवस्य सर्वज्ञत्वं भज्येत। किञ्चैकस्य मुक्तौ सर्वेषां मुक्तिः प्रसज्येत। न चेष्टापत्तिः। प्रपञ्चस्य युगपद्विनाशप्रसङ्गात्। तथाच मोक्षे यत्नोऽपि विफलः स्यात्। तस्माद्भिन्ना एवात्मानः। तथा चोक्तं श्रीमत्पौष्करे—

ऋषयः—

आत्मानो बहवः प्रोक्ता बहुत्वं केन गम्यते।
नाध्यक्षगम्यं तत्तावन्नानुमाविषयं ततः॥

---

1 यत्परस्परविरुद्धजन्ममरणादिधर्मवत् तत् भेदवत् (मै).

भेदस्य मेयधर्मत्वान्माता मेयः कथं भवेत् ।
न हेतुसाधनाभावोऽप्यात्मभेदोपपादकः ॥
सोपाधिकात्मधर्मस्य भेदात्सोपाधिकान्तरे ।
यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते ॥
न सर्वे सम्प्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः ।
तस्मादेकात्मभावेऽस्मिन् परिहारो विधीयताम् ॥

ईश्वरः—

आत्मानो बहवो जन्ममरणादिविभेदतः ।
जन्मनाशादयो धर्मा दृश्यन्ते भिन्नवस्तुषु ॥
ततस्तु जन्मनाशाद्या आत्मनो भेदकाः स्थिताः ।
न देहस्यैव जन्माद्या देहाद्यैः सह चात्मनाम् ।
देहादेर्यदि जन्माद्या न स्याच्चैतन्यदर्शनम् ॥
तद्देहे जातबालानामपि चैतन्यमिष्यते ।
चैतन्येनावियुक्तः सन् देहादिरुपजायते ॥
जन्मादिभेदवन्तोऽतो देहाश्चिद्भेदसाधकाः ।
चैतन्यस्येह नित्यस्य कथं जन्मेति चेन्मतिः ॥
अत्यल्पमिदमेते च नित्या देहेन्द्रियादयः ।
नासतो विद्यते भावो नाभावो विद्यते सतः ॥
तस्मादेकात्मवादोऽयं कल्पितो मूढचेतनैः ।

ऋषयः—

अथाकाशं यथा कुम्भकलशोदञ्चनादिषु ॥
एकमेव स्थितं तद्वद्देहे[1]ष्वात्मा व्यवस्थितः ॥

---

[1] हेऽप्यात्मसंस्थितिः (दे).

ईश्वरः—

तच्चैकरूपमाकाशं नैवं चैतन्यमिष्यते ।
भोक्तुमिच्छा यदैकस्य गन्तुमिच्छाऽपरस्य च ॥
[1] तदेवमात्मचैतन्यं भिन्नरूपमिव स्थितम् ।
यद्यभिन्न तु सर्वेषां भोक्तुमिच्छैकदा भवेत् ॥

ऋषयः—

सोपाधिकात्मधर्मस्य भेदादिति ननूदितम् ।

ईश्वरः—

अणोरभेदे संसिद्धे तथा वक्तव्यमग्रजाः ॥
युक्तिभिः साधिते भेदे नासिद्धिस्वीकृतिः शुभा ।
अत एव घटाकाशे रजोधूमादिभिर्युते ॥
न सर्वे सम्प्रयुज्यन्ते यथान्ये तन्न दूषणम् ।
भेदस्य मेयधर्मत्वादिति यच्चोदितं पुरा ॥
स च हेतुरसिद्धोऽत्र मेयामेयार्थयोर्धृतः ॥
भेदोऽप्युभयनिष्ठः स्यान्न च मातुरमेयता ।
शिवस्य मेया ह्यात्मानो न चेत्सर्वज्ञताक्षतिः ॥ इति ॥

(पौ. पशु. प. श्लो. ७४-९१

अन्यत्र—

स्थितायां सर्वतो मुक्तौ भवोच्छेदः प्रसज्यते ।
न चास्ति स भवोच्छेदस्तेन ते बहवो मताः ॥ इति ॥

एवं चात्मनो देहाद्यन्यत्वनित्यत्वचिद्रूपत्वकर्तृत्वनानात्वानि च सिद्धानि । सर्वज्ञत्वमपि स्वतः सिद्धम् । किञ्चिज्ज्ञत्वं मलरूपकारणात् । तदुक्तं तत्रैव—

---

[1] तदेवमस्माच्चैतन्य (मैं).

अणोः प्रत्यक्षसिद्धत्वान्नानुमाध्यक्षबाधिका ।
नेह ग्राहकता बुद्धेः साधितत्वाज्जडत्वतः ॥
किं चैतद्ग्राहकत्वं च न भेदादात्मनां स्थितम् ।
स्वरूपं तु ततस्तेषां ग्राहकत्वेन संस्थितिः ॥
न चांशेन पदार्थानां विचारः शोभते क्वचित् ।
*तद्वत् स्वतोऽमी सर्वज्ञाः किञ्चिज्ज्ञत्वं तु कारणात् ।
निरुद्धं येन सार्वज्ञ्यं स मलः परिपठ्यते ॥ इति ॥

(पौ. पशु. प. श्लो. ११०–११४)

नन्वयं साकारो निराकारो वा? आद्येऽपि दृश्याकारो वा दृश्यादृश्याकारो वा? नाद्यः । देहमध्येऽन्यस्यादर्शनात्; न द्वितीयः; दृश्यादृश्यत्वयोरेकत्र विरोधात् । काष्ठाग्निवच्छाखाचन्द्रवच्चोभयमपि कालभेदेन सम्भवतीति चेत्, न; तद्वदेव कदाचिद्दर्शनप्रसङ्गात् । नापि तृतीयः; सूक्ष्मशरीराव्यतिरेकप्रसङ्गात् । नापि निराकारः; तत्संबन्धेन शरीरे चेष्टाद्ययोगात् । न ह्याकाशसंयोगेन कुत्रचिच्चेष्टा भवति; चेष्टावत्संयोगस्यैव दृतिप्रभृतिषु चेष्टाजनकत्वदर्शनात् । किं चात्मनश्चिद्रूपत्व इन्द्रियाणां वैयर्थ्यमापतेत् । न हि चितो ज्ञातृत्वेऽचित्साहित्यमपेक्ष्यत इति युक्तम् । अपि चात्मनो व्यापकत्वे ललाटादिनियतदेशवृत्तित्वायोगेनावस्थापञ्चकानुपपत्तिप्रसङ्ग इत्यनुपपत्तिपराहतमात्मस्वरूपमिति; उच्यते—निराकार एवायमात्मा । न चैवं शरीरे चेष्टानुपपत्तिः; क्रियाशक्त्या तदुपपत्तेः । न च तस्याः सर्वदा सद्भावेन चेष्टापि सर्वदा स्यादिति वाच्यम्;

---

* अत्र मुद्रितपौष्करागमे—

अग्निः शक्तिं विना कीदृगिति चिन्ता न कुत्रचित् ।
स्वपरग्राहकस्तस्मात्सर्वदा मा व्यवस्थितः ॥

इत्यादिकः पाठो दृश्यते ।

तस्या आणवावृतत्वेनासत्कल्पतयाऽभिव्यञ्जकबुद्धिवृत्तिरूपसंरम्भ-सापेक्षतया कार्यस्य कादाचित्कत्वोपपत्तेः। न चैवं संरम्भ एव चेष्टा-प्रयोजकोऽस्तु, किं क्रियाशक्त्येति वाच्यम्; संरम्भमात्रस्य जडधर्म-तया चेष्टाप्रयोजकत्वानुपपत्तेश्चेतनशक्तेरावश्यकत्वात्संरम्भोत्पादनाय क्रियाशक्तेरावश्यकत्वाच्च। ज्ञानक्रिययोर्मूर्तित्वोपचारेण मूर्तिमानपि भवति। एवमात्मनश्चिद्रूपत्वेऽपि नेन्द्रियापेक्षानुपपत्तिः। चैतन्यशक्ते-र्मलावृतत्वेन तदभिव्यक्त्यर्थे बुद्धिरूपबोधोत्पादनाय तदपेक्षोपपत्तेः। बुद्धिवृत्तेर्जडत्वेन तदभिव्यक्ताचिच्छक्तेरेव प्रकाशकत्वात्। एवं व्याप-कत्वेप्यस्य न काप्यनुपपत्तिः। जाग्रदाद्यवस्थापरिकरस्य ललाटादि-वृत्तित्वेन तदवच्छिन्नस्यापि ललाटादिनियतदेशकत्वोपपत्तेः। सूक्ष्म-देहस्य गतिमत्त्वेन तदवच्छिन्नस्य सकलावस्थस्य परलोकगत्याद्युप-पत्तेश्च॥

तथा हि—आत्मनस्तिस्रोऽवस्थाः। केवलावस्था, सकलावस्था, शुद्धावस्था चेति। तत्र यदा द्विविधेन देहेन प्राणेन्द्रियान्तःकरणैश्च विनाकृतोऽत एवाभिव्यञ्जकविधुरतयाऽऽणवावृतसङ्कल्पज्ञानक्रिया-शक्तिः किमप्यबुध्यमान आस्ते तदा केवलावस्था। यदा सूक्ष्मदेहेनान्न-मयप्राणमयमनोमयविज्ञानमयानन्दमयकोशैश्चावच्छिन्नस्तदा सकला-वस्था। यदा कर्मसाम्ये तन्नियतशक्तिनिपाते च सति गुरुकृपावशा-च्छिवानन्दाभिव्यक्तेर्मलत्रयनिवृत्त्या शिवैक्याभिव्यक्तिस्तदा शुद्धाव-स्था। तत्र सकलावस्थातः केवलावस्थाप्राप्तिसमयेऽवस्थाभेदः पञ्च-विधः। नादादिपृथिव्यन्तषट्त्रिंशत्तत्त्वैः सह यदा ललाटस्थः सर्वान् विषयाननुभवति तदा सप्रतिभा जाग्रदवस्था। सैव सकलावस्था। विषय-भोजकादृष्टाभावेन प्रेरकाणि शुद्धानि पञ्चतत्त्वानि भोजयितृकाणि सप्त-तत्त्वानि पञ्चमहाभूतानि च; एतेषु सप्तदशसूपरतेषु श्रोत्रादीनि पञ्च, वागादीनि पञ्च, मनोबुध्यहङ्कारचित्तानि चत्वारि, शब्दादीनि पञ्च,

तात्त्विकानि वचनादीनि पञ्च, प्राणादीनि दश चेत्येतैः सह क्षेत्रज्ञनामक आत्मा पञ्चत्रिंशो यदा मुखे तिष्ठन्नपि प्रेरकभोजयितृकाण्डयोर्निर्व्यापारत्वेनाणवातिशयाज्जाग्रन्नपि विषयान् सम्यङ्न जानाति तदा अप्रतिभा जाग्रत्। सूक्ष्मदेहभोगनिमित्तानि शब्दादीनि पञ्च, वचनादीनि पञ्च, प्राणादीनि दश, मनोबुद्ध्यहङ्काराचित्तानि चत्वारि, एतैः सह पञ्चविंशकः क्षेत्रज्ञनामक आत्मा यदा कण्ठे स्थितो व्यावहारिकविषयान्विहाय तात्कालिकप्रातिभासिकविषयाननुभवति तदा स्वप्नावस्था। स्थूलसूक्ष्मदेहभोगान् त्यक्त्वा यदा हृदये चित्तप्राणवायुभ्यां सह तृतीय आत्मा तिष्ठति तदा सुषुप्त्यवस्था। यदा नाभिस्थाने प्राणवायुना द्वितीय आत्मा तिष्ठति तदा तुरीयावस्था। यदा तु मूलाधारे तत्त्वतात्त्विकादीन् सर्वान्विहाय आत्मैवैक आणवावृतस्तिष्ठति तदा तुर्यातीतावस्था। सैव नित्यकेवलावस्थेत्यादिना केवलावस्था चतुर्विधा ॥

ननु महाप्रळये तत्त्वतात्त्विकादीनां सर्वेषां लीनत्वादात्मनः केवलत्वेनावस्थानं सम्भवतु; इदानीं तत्त्वानामाप्रलयावस्थायिनां विभोरात्मनश्च सत्त्वेऽपि कथं [1]तत्तद्व्यापाराभाव इति चेत्, सत्यं, अग्नेरयसश्च सत्त्वेऽपि संयोजकपुरुषव्यापाराभावाद्यथायसो न दाहकत्वं तथा विद्यमानानामपि तत्त्वानां भोजकादृष्टाभावप्रयुक्तायाः शिवशक्तिप्रेरणाया आभावान्न विषयभोजकत्वम्। तदुक्तं—

अयसाग्नेर्यथा योगो वियोगोऽग्नेर्यथायसा।
तत्त्वानामात्मनश्चैव शक्त्या कर्मवशाद्भवेत् ॥ इति ॥

अथ निर्मलजाग्रदाद्युच्यते—अकारोकारमकारबिन्दुनादाधिष्ठातृशिवशक्तियोगेन निर्मलान्तःकरण आत्मा हृदये तिष्ठन् सर्वं दृश्यमानं

1 तद्व्यापार (दे).

प्रपञ्चं शिवाकारतया वैषयिकसुखं च स्वरूपानन्दतयाऽनुभवति तन्नि-र्मलजाग्रत् । जाग्रदवस्थाकारणस्याकारस्योकारे बाह्यविषयग्राहकस्य मनसश्चाहङ्कारे लये सति अहङ्कारादिचतुष्टयस्योकारादिचतुष्टयेन सह कण्ठे सोहम्भावनयाऽवस्थानं निर्मलस्वप्नः । स्वप्नावस्थाकारणस्यो-कारस्य मकारे अहमित्यभिमानकारणस्याहङ्कारस्य च बुद्धौ लये सति बुद्ध्यादित्रयस्य तत्प्रेरकस्य मकारादित्रयस्य च सुषुप्तिस्थानभूतताल-मूले देहेन्द्रियवृत्तिरहितवाचामगोचरज्ञेयज्ञातृज्ञानत्रिपुटीरूपेणावस्थानं निर्मलसुषुप्तिः । सुषुप्त्यवस्थाकारणमकारस्य बिन्दौ निर्णायक-बुद्धेश्च चित्ते लये सति चित्तसहितात्मनो बिन्दुनादाभ्यां सह तुर्या-वस्थास्थानभूते भ्रूमध्ये बाह्यान्तःकरणव्यापारराहित्येन ज्ञप्तिमात्रे-णावस्थानं निर्मल[1]तुरीयम् । तुर्यावस्थाकारणबिन्दुनादयोः कुटिलायां चित्तस्य च प्रकृतौ लये सति तुर्यातीतावस्थास्थानब्रह्मरन्ध्र आत्म-नोऽन्तर्बहिर्व्यापितयैकस्यैव तिष्ठतोऽखण्डाकारसच्चिदानन्दाद्वयपरिपूर्ण-शिवानन्याभिव्यक्तिः, सैव निर्मलतुर्यातीतम् । तदेवशुद्धावस्था । तदुक्तं सिद्धान्तसारावल्याम्—

बाह्यान्तःकरणैरणोः स्वविषयज्ञानं तु जाग्रत्ततः
स्वप्नोऽन्तःकरणस्थवृत्तिविषयज्ञानं सुषुप्तिः परम् ।
देहे त्विन्द्रियवृत्तिहीनमवचोग्राह्या मतिस्तुर्यकं
देहाक्षोपरतौ स्वचिन्मतिरथातीतं शिवत्वोदयः ॥ इति ॥

(सि. सा.–योगपादे श्लो. ८)

सिद्धान्तबोधे च—

जाग्रत्कारणमेवार्णयोगसंवेदनं हृदि ।
उभयेन्द्रियवृत्त्याथ लीनमाकारवेदनम् ॥

---

[1] तुर्यं (दे).

स्वप्नोऽन्तःकरणैरेव केवलैर्गळदेशतः ।
पूर्वविषयाख्याणुयोगेन संवेदनं [1] यदा ॥
लीनान्तःकरणं वृत्तेः सुषुप्तिस्तालुदेशतः ।
बिन्दूदयस्तु तुर्यं तु भ्रूमध्ये व्यतिरेकतः ॥
कार्यकारणयोरत्र वृत्त्यार्थादेश्च सङ्ग्रहः ।
सर्वार्थदृक्क्रिया[2]वृत्तिहेतोर्नादस्य वेदनम् ।
तुर्यातीता च रन्ध्रोऽत्र दण्डान्तादेश्च सङ्ग्रहः ॥ इति ॥

तदेवमवस्थाभेदोपेतो मलसम्बद्धचिद्रूपो व्यापकः पशुरिति सिद्धम्; एष च पशुरुपाधिभेदेन त्रिविधः सकलः प्रळयाकलो विज्ञानाकलश्चेति। तत्र सकलो नाम मलोपरुद्धदृक्छक्तित्वे सति [3]तत्प्रसाराय कलादिमत्त्वे सति भोगाय कर्मसम्बद्धः। प्रळयाकलो नाम प्रळये उज्झितकलत्वे सति दीक्षया प्रायश्चित्तेन भोगाद्वा अशुद्धाध्वविषयकर्मपरिक्षयवत्त्वे सति भोक्ष्यमाणमिश्राध्वकर्मणा स्ववशीकृतकलासम्बन्धवान्। विज्ञानाकलो नाम विज्ञानादिना सर्वकर्माणि कलाश्च विहाय दृक्क्रियावारकाणवमलमात्रयुक्तो विज्ञानकेवलः। तथा चोक्तं श्रीमत्पौष्करे—

पशवस्त्रिविधा ज्ञेयाः सकलः प्रळयाकलः ।
विज्ञानाकल इत्येषां शृणुध्वं लक्षणं क्रमात् ॥
मलोपरुद्धदृक्छक्तिस्तत्प्रसृत्यै कलादिमान् ।
भोगाय कर्मसम्बन्धः सकलः परिपठ्यते ॥
प्राग्वन्निरुद्धदृक्छक्तिः कर्मपाकात्कलोज्झितः ।
कर्मणैष्यत्कला[4]योग्यो यस्स च प्रळयाकलः ॥

---

1 हृदि (दे). 2 व्यक्ति (मै). 3 तत्प्रसाधाय—दे. 4 योगे यस्य स (मै).

मलोपरुद्धशक्तित्वाच्छून्यकल्पस्वदृक्क्रियः ।
तृतीयः पठ्यते तन्त्रे नाम्ना विज्ञानकेवलः ॥ इति ॥

(पौ. पशु. प. श्लो. २–५)

तत्र सकलानामवस्थानमशुद्धमायाधोभागेऽशुद्धाध्वनि । प्रलयाकलानां तु अशुद्धमायामध्यभूतमिश्राध्वनि । विज्ञानकेवलानामशुद्धमायोपरि शुद्धविद्याधोभागे । एतच्चावस्थानं विभुत्वेऽप्युपाधिवशाल्लक्ष्यते । तदुक्तं तत्रैव—

मायादावुदरे चान्ते क्रमेणैषां व्यवस्थितिः ।
अवस्थानं च बन्धेन लक्ष्यतेऽणोर्विभुत्वतः ॥ इति ॥

(पौ. पशु. प. श्लो. ६)

ननु विज्ञानकेवलानां मलमात्रावृतत्वेन मलस्य च व्यापकतया एकदेशे मायान्ते कथमवस्थानम्? उच्यते—अशुद्धमायाया भुक्तत्वेन तत्रेच्छाभावाद्भोक्ष्यमाणशुद्धमायायाश्च बुभुक्षितत्वेऽपि तत्प्रापकशिवेच्छाया अभावात्तयोर्मध्येऽवस्थानमित्युक्तम् । ते च शिवेच्छया शुद्धाध्ववर्तिनो भवन्ति । तद्वर्तिनामपि तेषां न सकलत्वम् । किं तु शिवेच्छया अधिकारमलसहितत्वेन केवलं विज्ञानकलत्वमेव । विज्ञानरूपा कला येषामिति विज्ञानकलाः । तथा चोक्तं श्रीमत्पौष्करे—

ऋषयः—

विज्ञानकेवलाणूनां बन्धस्तु मल एव हि ।
मलस्य व्यापकत्वेन मायान्ते संस्थितिः कथम् ॥

ईश्वरः—

भद्रं विप्रा महाप्राज्ञाः शुद्धाध्वा यः पुरोदितः ।
भोक्ष्यमाणतया तस्य भुक्तत्वेनेतरस्य च ॥

अर्थादेव स्थिता मध्ये प्रोक्ता विज्ञानकेवलाः ।
विज्ञानकेवलाः साक्षात्त एव मुनिपुङ्गवाः ॥
शुद्धाध्ववर्तिनः पश्चाद्भविष्यन्ति शिवेच्छया ।
अणोर्नियामकत्वेन मायावच्छुद्धवर्त्मनः ॥
तद्वर्तिनो न सकलाः किं तु विज्ञानकेवलाः ।
अधिकारमलोपेताः शिवेच्छानुमताः सदा ॥ इति ॥

(पौ. पशु. प. श्लो. ७–११)

तेषां मायाकर्मराहित्ये हेतुरपि तत्रैवोक्तः—

विज्ञानकेवलानां तु सिद्ध्यै युक्तिरिहोच्यते ।
कलातत्त्वान्तरोधिन्या दीक्षया ज्ञानतोऽपि वा ॥
योगेन भोगतो[1]वाथ सन्न्यासाद्वा परिक्षये ।
कर्मणां तु तदायत्तमायायाश्च परिक्षयात् ॥
मल एको[2]ऽवशिष्टः स्यात्तस्माद्विज्ञानकेवलाः ।
बौद्धादिदृष्टिमुक्तानां कैवल्यमपि नेष्यते ॥
यतस्तद्बुद्धितत्त्वोर्ध्वकर्मणामपरिक्षयः ।
सकला एव ते ज्ञेयाः कलायोगो यतः स्थितः ।
एवमेवाणवो युक्तिसिद्धाः प्रलयकेवलाः ।
तत्त्वानामुपसंहारे प्रळयात्कर्मणोऽथ वा ॥
त्यक्तसूक्ष्मबहिर्देहा एष्यद्भोगनिबन्धनैः ।
अपक्वैः कर्मभिर्युक्ता इष्यन्तां प्रळयाकलाः ॥
सकलास्तु कलायोगात् सूक्ष्मा स्थूला च सा द्विधा ।
प्रतिपुंनियतं तत्त्वं कलाद्यवनिपश्चिमम् ॥ इति ॥

(पौ. पशु. प. श्लो. १२-१८)

---

[1] वापि (दे). [2] विशिष्टः (मै).

विज्ञानकेवलाश्च प्रशान्तकलुषा अप्रशान्तकलुषाश्चेति द्विविधाः। तेषु कांश्चन मलपरिपाकं निरीक्ष्यैव शिवः शुद्धाध्वन्यधिकारे योजयति। कांश्चिद्भोगाख्ये तत्त्वे योजयति। तत्र योजिताश्च तेऽभीप्सितविविधभोगान् भुञ्जानाः पत्युरिच्छयाऽधिकारेषु प्रवर्तन्ते। येत्वीश्वरतत्त्वं प्रापिता अधिकारगुणोपेता महान्तश्चक्रवर्तिनो यथापूर्वगुणोत्तरा अष्टावनन्ताद्या विद्येश्वराः। केचन पुनर्विद्याद्वयं तत्त्वं प्राप्ताः सप्तकोटिमहामन्त्राः। एतेषां मध्ये यस्य स्वाधिकारे वैराग्यं जायते तं मलपारिपाकानुगुण्येनैवेश्वरोऽनुगृह्य परमां मुक्तिं प्रापय्य सादाख्यतत्त्वगतानां पदे ईश्वरतत्त्वगतान्, ईश्वरतत्त्वगतानां पदे विद्यातत्त्वगतान्, तत्रत्यानां पदे मायामस्तकगतांश्च योजयति। तदुक्तं श्रीमत्पौष्करे—

इच्छयैवानुगृह्यादौ शिवो विज्ञानकेवलान्।
मलपाकमपेक्ष्यैव कांश्चिच्छुद्धाध्वगोचरे॥
योजयत्यधिकारेषु कृत्वा दृक्क्रिययोत्कटान्।
[1] कांश्चिद्भोगाह्वये तत्त्वे सर्वज्ञान्बलशालिनः॥
सदाशिवगुणोपेता भोगाख्यं तत्त्वमाश्रिताः।
मनोऽभिलषितान्भोगान्भुञ्जाना विविधानपि॥
पतिकृत्याधिकारेषु प्रवृत्ताः पत्युरिच्छया।
ये प्राप्तास्तत्त्वमैशानं विशेषेण क्रियाधिकाः॥
अधिकारगुणोपेता महान्तश्चक्रवर्तिनः।
अष्टावनन्तसूक्ष्माद्या यथापूर्वं गुणाधिकाः॥
अतिसौन्दर्यलावण्या अक्षीणमनसः सदा।
विद्याविद्याद्वयं प्राप्ताः सङ्ख्यया सप्तकोटयः॥
प्रशान्तकलुषाः सर्वे महात्मानोऽमितौजसः।

---

1 "तत्त्वे भोगाह्वये चान्यान् योजयेदीश्वराह्वये।
अन्यान् विद्याह्वये तत्त्वे सर्वज्ञान् बलशालिनः"॥ (दे)

एतेषां यस्य वैराग्यमुपजातं महात्मनः ॥
किमेतेनाधिकारेण श्रेयसः परिपन्थिना ।
इति तं परमेशानो मलपाकमपेक्ष्य सः ॥
स्वेच्छयैवानुगृह्णाति मुक्तिव्यक्त्यर्थया दृशा ।
ततो मुक्त्यर्थमासन्नं कनिष्ठं तत्पदे विभुः ।
नियुनक्त्यनुगृह्यान्यं तत्पदे नियुनक्त्यपि ॥ इति ॥

(पौ. पशु. प. श्लो. ४९–५८)

एवं प्रळयाकला अपि द्विविधाः । पक्वमला अपक्वमलाश्चेति । शिवः पक्वमलाननुगृह्य तेभ्यो भुवनपतित्वं ददाति । प्रलयकालेषु अपक्वमलाः प्राकृतभोगकर्मवशात्पुर्यष्टकदेहयुताश्च सकला भवन्ति । तदुक्तं तत्रैव—

स्वेच्छयैवानुगृह्णाति प्रळयाणूनपीश्वरः ॥ इति ॥

(पौ. पशु. प. श्लो. १९)

अन्यत्र च—

प्रळयाकलेषु येषां पक्वे मलकर्मणि व्रजन्त्यन्ये ।
पुर्यष्टकदेहयुतां योनिषु निखिलासु सूक्ष्मकर्मवशात् ॥
कांश्चिदनुगृह्य वितरति भुवनपतित्वं महेश्वरस्तेषाम् । इति ॥

सकला अपि त्रिविधाः; सांसिद्धिकवैनयिकप्राकृतभेदात्। तत्र सांसिद्धिको नाम पूर्वजन्मनि कृतश्रवणमनननिदिध्यासनोऽनिष्पन्नशिवसाक्षात्कारस्तदर्थं शुकवामदेवजडभरतादिवत्परिगृहीतदेहोऽविच्छिन्ननिदिध्यासनवासनया शिवानुग्रहाच्छिवसाक्षात्कारवान् । वैनयिको नाम गुरौ विनयशीलः सन् दीक्षां लब्ध्वा मानोवाक्कायिकशिवधर्मैः शुद्धः लौकिकशिवशास्त्रयोः परिज्ञानवान्। तदनुग्रहप्रकारं दीक्षापरिच्छेदे वक्ष्यामः । प्राकृतो नाम स्वप्नज्ञानवत् ज्ञाताज्ञातबोधः प्रकृतिजन्यदेहेन्द्रियादिष्वात्माभिमानवान्। तदुक्तं श्रीमृगेन्द्रे—

[illegible] विशिष्टधर्मसंस्कारसमुद्दीपितचेतसाम्।

गुणः सांसिद्धिको भाति देहापायेऽपि पूर्ववत् ॥
लोकधीगुरुशास्त्रेभ्यो भाति वैनयिको गुणः ।
सम्मा(मा)र्जितो वैनयिको मनोवाक्तनुचेष्टया ॥
प्राकृतो देहसयोगे व्यक्तः स्वप्नादिबाधवान् । इति ॥

(प्र. १० श्लो. २६-२८)

**अस्य च सकलस्य बन्धमोक्षप्रकारावस्थाभेदश्च श्रीमत्किरणे प्रतिपादितः ।**

**गरुडः—**

[1]यद्येवं स पशुस्तावत् कीदृशो बद्ध्यते कथम् ।
मुच्यते कथमाख्याहि सन्देहविनिवृत्तये ॥

**भगवानुवाच—**

पशुर्नित्यो ह्यमूर्तोऽज्ञो निष्क्रियो निर्गुणोऽप्रभुः ।
व्यापी मायोदरान्तस्थो भोगोपायविचिन्तकः ॥
तस्याशुद्धस्य सम्बन्धं समायाति शिवात्कला ।
तयोद्दलितसामर्थ्योऽविद्यादर्शितगोचरः ॥
रागेण रञ्जितश्चापि प्रधानेन गूणात्मना ।
बुद्ध्यादिकरणानीकसम्बन्धा[2]द्बध्यते पशुः ॥
ततो नियतिसंश्लेषात्स्वार्जिते विनियम्यते ।
कालेन कालसङ्ख्यानकार्यभोगविमोहितः ॥
एवं तत्त्वकलाबद्धः किञ्चिज्ज्ञो देहसंयुतः ।
मायाभोगपरिष्वक्तस्तन्मयः सहजावृतः ॥
ततः सुखादिकं कृत्स्नं भोगं भुङ्क्ते स्वकर्मतः ।
समे कर्मणि संज्ञाते कालान्तरवशात्ततः ॥

---

1 यद्येवासौ (अ). 2 न्धाज्जायते (अ).

तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा ।
सर्वज्ञः स शिवो यद्वत् किञ्चिज्ज्ञत्वविवर्जितः ॥
शिवत्वव्यक्तिसम्पूर्णः संसारी न पुनस्तदा ।
एवं क्रमेण बद्धः स मुच्यते क्रमयोगतः ॥
केवलः सकलः शुद्धस्त्र्यवस्थः पुरुषः स्मृतः ।
मलिनत्वाच्चितेर्मोक्षः प्राप्यते निर्मलाच्छिवात् ॥
पशुरेवंविधः प्रोक्तः किमन्यत्परिपृच्छसि ॥ इति

(किर. पशु. प. श्लो. १४–२४)

एतद्भेदोपाधिभूतमलमायाकर्मणां लक्षणं पाशपटले वक्ष्यते। नन्वात्मनि सिद्धे तद्भेदो युज्यते। तत्सद्भावे किं मानम्? उच्यते; चेष्टमानो देहादिश्चेतनाधिष्ठितो भवितुमर्हति, जडत्वात्, घटवत्, एवं च जडप्रवर्तकत्वेनात्मा सिद्धः। यथा वा ईश्वरकर्तृकं तनुकरण-भुवनादिकं कस्यचिदुपभोगाय भवितुमर्हति, जडत्वात्, न चेश्वर एव तदुपभोक्ता; तस्यावाप्तसकलकामत्वात्। नापि भुवनादिकमपि तदुपभोक्तृ; स्वस्यैव भोग्यभोक्तृत्वासम्भवात्। न च वैयर्थ्यम्; प्रेक्षावत्कार्यत्वात्। तस्मात्पारिशेष्याज्जडेश्वरयोरन्येन तदुपभोक्त्रा भवितव्यम्। स चात्मेति सिद्धम्। तदुक्तं श्रीमत्पौष्करे—

ऋषयः—

सत्यात्मनि च संसिद्धे प्राक्प्रोक्तं सफलं भवेत्।
तत्सद्भावे ततः शम्भो! प्रमाणमभिधीयताम् ॥

ईश्वरः—

प्रवर्तमानो देहादिश्चेतनाधिष्ठितः सदा ।
स्वतः प्रवृत्तिशून्यत्वाज्जडत्वेन घटादिवत् ॥
यस्तु प्रवर्तकः सोऽयमात्मेति परिपठ्यते ॥ इति

(पौ. पशु. प. श्लो. ५९–६१)

श्रीमन्मृगेन्द्रे च--

कार्यं क्षित्यादि कर्तेशस्तत्कर्तुर्नोपयुज्यते ।
न स्वार्थमप्यचिद्भावान्नानर्थ्यं कर्तृगौरवात् ॥
पारिशेष्यात्परार्थं तत् क्षेत्रज्ञः स परस्तयोः ।
परो देहस्तदर्थत्वात् परार्थाः क्ष्मादयो ननु ॥
कायोऽप्यचित्त्वादान्यार्थ्यं सुतरां प्रतिपद्यते ।
चेतनश्चेन्न भोग्यत्वाद्विकारित्वाच्च जातुचेत् ॥
भोग्या विकारिणो दृष्टाश्चिद्विहीनाः पटादयः ॥ इति ॥

(मृ. प्र. ६ श्लो. २-५)

इति श्रीमदतिवर्णाश्रमाचार्यवर्यशैवपरिपालकशिवाग्रयोगीन्द्र-
ज्ञानशिवाचार्यविरचितायां शैवपरिभाषायां
पशुपदार्थनिरूपणं नाम
तृतीयः परिच्छेदः ॥

---

## अथ चतुर्थः परिच्छेदः

---

अथ पाशपदार्थो निरूप्यते। तत्र पाशत्वं नाम शिवानन्दाभिव्यक्तिविरोधित्वम्। तच्चाणवमलस्याच्छादकतया, तिरोधायकशक्तेस्तु तच्चोदयितृत्वेन, बिन्दुमायाकर्मणामपि भोगभोग्यसम्पादनद्वारा वैषयिकसुखादिजनकत्वेन च बोध्यम्। अयं च पाशः पञ्चविधः। आणवं तिरोधायकशक्तिर्बिन्दुर्माया कर्म चेति। तत्र चत्वारः पदार्था जडरूपाः। तिरोधायकशक्तिस्तु चिद्रूपापि पाशानुग्राहकत्वात् पाश इत्युपचर्यते। तत्राणवत्वं नाम आत्मनो दृक्क्रियारोधकत्वम्। अस्य चाणवत्वोक्तिर्विभोरात्मनोऽणुत्वसम्पादनात्॥

नन्वस्य सद्भावे किं मानम्? न तावत्प्रत्यक्षम्; तस्यातीन्द्रियत्वाभ्युपगमात्। नाप्यनुमानम्; तस्य क्वचिदप्यदर्शनेन सहचारग्रहविरहेणान्वयिनोऽसम्भवात्। व्यतिरेकस्योक्तन्यायेन प्रत्यक्षानुमानावगम्यतया तदभावे व्यतिरेकव्याप्तेरग्रहे व्यतिरेकिणोऽप्यनवतारात्। तस्मान्मलसद्भावे न किञ्चिन्मानं पश्यामः। अत्रोच्यते—आत्मा किञ्चिदावृतसार्वज्ञ्यः, किञ्चिज्ज्ञत्वात्, यः किञ्चिदावृतसार्वज्ञ्यो न भवति स किञ्चिज्ज्ञोऽपि न भवति, यथा शिव इति व्यतिरेक्यनुमानेन मलसिद्धिः। न चात्मनां सर्वज्ञत्वे न किं चिन्मानमिति वाच्यम्; तेषां ज्ञानशक्तिः; सर्वविषया, ज्ञानशक्तित्वात्, ईश्वरशक्तिवत्, इत्यस्य तत्र मानत्वात्। न चास्याप्रयोजकत्वम्; विषयनैयत्यप्रयोजकस्य तत्तद्विषयसम्बद्धकरणजन्यत्वस्याभावेन नियतविषयत्वायोगात्। स्वाभाविके वा तेषां किञ्चिज्ज्ञत्वे मुक्तौ सर्वज्ञत्वश्रुतिविरोधाच्च। एवं च ज्ञानशक्तेर्न स्वाभाविकमसर्वगोचरत्वमित्याच्छाद-

नाधीनमेवाभ्युपेयम् । तच्चाच्छादकजन्यमित्याच्छादकत्वेन मल-सिद्धिः । उक्तं च श्रीमत्पौष्करे—

आत्मा मलावृतः सर्वज्ञत्वे किञ्चिज्ज्ञता यतः ।
न किञ्चिज्ज्ञस्तु यः सोऽयं मलेनापि न संवृतः ॥
यथा शिवस्तथा नायं मलेनैव समावृतः ॥ इति ॥

(पौ. पशु. प. श्लो. १२५-१२६).

न चाज्ञानेनार्थान्तरत्वम्; विकल्पासहत्वात् । तथाहि—तदज्ञानं ज्ञानाभावः अन्यथाज्ञानं वा? नाद्यः; अभावस्याकिंचित्करत्वात्। न हि घटाद्यभावाः किंचित्कार्यं कुर्वन्ति । किं च स च ज्ञानाभावः प्रागभावः प्रध्वंसाभावः अत्यन्ताभावो वा? नाद्यः; कालान्तर एव ज्ञानोदयप्रसङ्गात्। न द्वितीयः; कालान्तरे ज्ञानानुदयप्रसङ्गात्। नापि तृतीयः; बाधात्। नाप्यन्यथाज्ञानम्; तस्य दोषं विनानुदयात्। किञ्चेदमन्यथाज्ञानमागन्तुकं स्वाभाविकं वा? आगन्तुकं चेन्नित्यचिच्छक्तेर्बाधकं न स्यात्। नापि द्वितीयः; तस्य स्वाभाविकत्वेऽन्यथात्वायोगात्। तथा चोक्तं श्रीमत्पौष्करे—

तदिह ज्ञानमात्रं चेज्ज्ञानाभावः किमज्ञता ।
अन्यथाप्रतिभासो वा गतिरन्या न विद्यते ॥
ज्ञानाभावो न चाज्ञानं तस्याकिंचित्करत्वतः ।
[1]नाभावोऽपि घटस्येह जलमाहरति क्वचित् ॥
ज्ञानस्य प्रागभावश्चेज्ज्ञानोत्पत्तिः प्रसज्यते ।
नाप्येतदन्यथाज्ञानं तस्याप्यनुदयात्स्वतः ॥
शुक्तिकारजतज्ञानं न भवेत्पटलं विना ॥
किं चैतदन्यथाज्ञानमागन्तुकमथेतरत् ॥

---

1 नह्यभावो( दे).

आगन्तुकं चेच्चिच्छक्तेर्बाधकं न कदाचन ।
यद्यनागन्तुकं तर्हि नान्यथाज्ञानमेव तत् ॥
अनित्यमेव तज्ज्ञेयं रजतज्ञानवद्द्विजाः ।
किं चैतदन्यथाज्ञानं न सम्यग्ज्ञानबाधकम् ॥
न दृष्टं शुक्तिकाज्ञानं रजतज्ञानबाधितम् । इति ॥

(पौ. पशु. प. ११५-१२१)

**अयं च मलो द्रव्यरूपो भवितुमर्हति; अनेकशक्तिमत्त्वात्, अनलवत् । उक्तं च श्रीमत्पौष्करे—**

किं च द्रव्यं मलोऽनेकशक्तिमत्त्वाद्यथाऽनलः । इति ॥

(पौ. पशु. प. श्लो. ११५)

**अत एवायमात्मनो न गुणः; गुणत्वे गुणगुणिसम्बन्धस्य नित्यत्वात् तस्य निवृत्त्यभावप्रसङ्गेन मुक्तौ तन्निवृत्तिश्रवणविरोधात् । न चाणवसाधकस्यानुमानस्य रागेणार्थान्तरत्वम्; तस्य निर्मले अकिंचित्करत्वात् । यदि निर्मलेऽपि स्यान्मुक्तात्मस्वपि स्यात् । किं च बुद्धिधर्मस्य रागस्य प्राकृतत्वेनानित्यतया नित्यायाश्चिच्छक्तेर्बाधकत्वं न सम्भवति । उक्तं च पौष्करे—**

रागोऽस्ति कारणं सक्तेरिति चेत्किं मलेन तु ।
सत्यं रागोऽस्ति तद्धेतुर्न स किंचित्करोऽमले ॥
अमलेऽपि स चेत्सक्त्यै स्यान्मुक्तेष्वविशेषतः ।
न हि मुक्तः शिवो वापि भोगासक्तः कदाचन ॥
किं चायं प्रत्ययात्मोक्तो रागो बौद्धो यतस्ततः ।
बुद्धिश्च प्रकृतेः सिद्धा तस्मादेष विनश्वरः ॥
चिच्छक्तेर्नित्यासिद्धाया [1]बाधकः कथमिष्यते ॥ इति ॥

(पौ. पशु. प. श्लो. १२७-१३०)

---

[1] स्संभवेत् बाधकः कथम् (दे).

नापि कर्मणा अर्थान्तरत्वम्; तस्य चिच्छक्तिसाध्यतया ज्ञानात्मकभोगहेतुतया च तदावारकत्वायोगात्। आवारकत्वे वा तस्य बुद्धिधर्मधर्माधर्मरूपतया बुद्धितत्त्वादूर्ध्वं बन्धकत्वायोगाच्च। किं च भोगैकव्यापृतयोस्तयोरावरणे कथं व्यापारः॥

नन्वेवं तदेव कार्यद्वयसाधकमस्तु; किं पदार्थान्तरकल्पनक्लेशेनेति चेत्, हन्त तर्ह्येकयैव विद्यया समस्तकार्यसंसिद्धौ कार्यभेदादर्शनात्तत्त्वान्तरक्लृप्तिर्व्यर्था स्यात्। तस्मान्न कर्म चिच्छक्तेरावारकमिति स्थितम्। उक्तं च तत्रैव—

कर्मणापि न च ज्ञानबाधः सम्भवति द्विजाः।
साध्यत्वात्कर्मणः पुंसः साधकत्वेन संस्थितेः॥
किं च भोगैकहेतुस्तत्कथं भोगस्य बाधकम्।
यतो ज्ञानात्मको भोगो न हि तेन तदावृत्तिः॥
धर्माधर्मात्मकं कर्म तौ च बौद्धौ व्यवस्थितौ।
व्याप्त्यभावात्तयोरूर्ध्वं बन्धकौ सर्वतः कथम्॥
किं च भोगप्रवृत्तौ तौ व्याप्रियेते कथं वृतौ।
अन्यत्रापि प्रवृत्तस्य यद्यप्यत्रापि हेतुता॥
अनेकतत्त्वसंक्लृप्तिः कार्यभेदाद्विहन्यते।
तस्मान्न कर्म चिच्छक्तेर्बाधकं [1] संव्यवस्थितम्॥
किञ्चाभिव्यञ्जकं कर्म चिच्छक्तेर्बाधकं कथम्। इति॥

(पौ. पशु. प. श्लो. १३०-१३५)

न च माययार्थान्तरत्वम्; तस्याः कार्यान्तरजनकतया क्लृप्तत्वेनावरणरूपकार्यान्तरजनकत्वायोगात्। किं च कलाद्युत्पादनद्वारा दृगादिशक्तिव्यक्तिं प्रति हेतुतया तद्विरुद्धाच्छादनहेतुत्वासम्भवाच्च। उक्तं च तत्र—

न च माया मलस्तस्माद्यतः कार्यात्मप्रकाशिका।

---

[1] सर्वथा स्थितम् (मै).

कार्यात्प्रकाशकं यत्तु स्वात्मना[1]च्छादकं न तत् ॥
यथा प्रकाशकौ दृष्टौ वह्निदीपावुभावपि ।
न दीपकारणं वह्निः क्वचिदप्यप्रकाशकः ॥
न च माया स्वरूपेण पुंसां कार्यकरी स्थिता ।
कार्यैरणूपकारित्वाद्यादित्थं तन्न चात्मना ॥
यथा तन्तुः स्वकार्येण पटेनैव न चात्मना ॥ इति ॥

(पौ. माया. प. श्लो. ५१-५४)

अत एव न देहस्याप्याच्छादकत्वम्; तस्यापि बुद्धिवृत्त्या-द्युत्पादनद्वारा तदभिव्यञ्जकत्वात् । तस्मादात्मनां दृक्क्रियावारक-प्रत्यात्मस्थस्वकालान्तापायिशक्तिसमूहवदेकमनादिव्याप्याणवमिति-सिद्धम् । उक्तं च श्रीमन्मृगेन्द्रे—

तदेकं सर्वभूतानामनादिनिबिडं महत् ।
प्रत्यात्मस्थस्वकालान्तापायि शक्तिसमूहवत् ॥ इति ॥

(मृ. प्र. ७ श्लो. ४)

एतदनुग्राहिका शिवस्य रोधकशक्तिः । तदुक्तम्—

तासां माहेश्वरी शक्तिः सर्वानुग्राहिका शिवा ।
धर्मानुवर्तनादेव पाश इत्युपचर्यते ॥ इति ॥

तथान्यत्र—(सिद्धान्तसारावल्यां)

नीहारोऽनादिरेको मनुजसहभवस्ताम्रगा कालिकेव
स्वाधीकारान्तनाशिप्रतिपुरुषदृगावारकानेकशक्तिः ।
पाश्यः शोध्यश्च बोध्यः स तु भवति यतो भोक्तृता पारतन्त्र्यम् ।
कर्मादेर्योग एतत्क्कातिमनुकलिता रोधयित्रीशशक्तिः ॥ इति ॥

(सि. सा. श्लो. ६)

---

1 जनकं (दे. पा. मुद्रित. पा.)

अयं च मलो मोहमदरागविषादतापशोषवैचित्र्याख्यकार्यभेदात्सप्तधा। तत्र मोहो नामात्मनामनादिः सहजो मदादीनां षण्णां हेतुः जानतामपि वनितादिषु मोहकारी मलः। स्वकीयतया प्राप्तेष्वङ्गनादिष्वतिशयाभिमानो मदः। रागो नाम विषयाभिलाषः। तदलाभे विषण्णत्वं विषादः। ततः प्रलापरूपस्तापः। पुत्रमित्रकळत्रादिभिर्धनादिभिश्च मत्समो नास्तीत्यादिविषयचिन्ता वैचित्र्यम्। तद्विनाशे स्तब्धात्मकत्वं शोषः। उक्तं च पौष्करे—

मलोऽपि सप्तधा ज्ञेयो मोहश्चापि मदस्तथा।
रागोऽन्यश्च विषादाख्यस्तापः शोषश्च सप्तमः॥
वैचित्र्यमपि सर्वेषां मलिनानां प्रकीर्तितम्।
मोहो नाम मलः पुंसां सहजोऽनादिमानिह॥
योनिः षण्णां मदादीनां प्रधानत्वाद्द्विजोत्तमाः।
यस्मिन्सत्यात्मनो मोहो जानतोऽप्यङ्गनादिषु॥
स मोह इति विख्यातो वर्ज्यावर्ज्याविभागतः।
प्राप्तामपि स्त्रियं येन स्तौति नास्याः पराङ्गना॥
दिव्याङ्गनेयमेवेति स मदः परिपठ्यते।
तदलाभे विषण्णत्वं बाष्पलोचनता यतः॥
स विषादो मलो नाम प्राणिनामतिदुःखदः।
ततस्तापो भवेदन्तःप्रलापात्मातिविस्तरः॥
स ताप इति विख्यातो मलः शोषो भवेत्ततः।
स्तब्धात्मा तु यदा यस्मान्मलोऽतीव सुदुस्तरः॥
एष बन्धुरियं भार्या मृष्टं चेदं धनं मही।
कृतार्थोऽहमतो यद्वा कस्त्राता मामकस्य च॥
कुटुम्बस्यैवमाद्या तु चिन्ता येन नृणां भवेत्।
नानामतिकरः सोऽयं मलो वैचित्र्यसंज्ञितः॥

सप्तैते सहजाः प्रोक्ता मला मलवतां नृणाम् ॥ इति ॥

(पौ. पशु. प. श्लो. १३७-१४६)

कः पुनरात्ममलयोः संबन्धः? समवाय इति चेत्; मलस्य गुणत्वप्रसङ्गः। न चेष्टापत्तिः; गुणस्य जडत्वे गुणिनोऽपि जडत्वप्रसङ्गात्। किं च समवायस्य नित्यतया अनिर्मोक्षप्रसङ्गाच्च। तस्माद्द्रव्यमेव मलोऽयुतसिद्धभावेन गुणवद्भाति। अतस्तयोः सम्बन्धः संयोग एव ॥

ननु युतसिद्धयोः सम्बन्धः संयोग इति संयोगलक्षणात् संयोगोऽपि न सङ्गच्छते। सत्यम्; तस्य जन्यसंयोगलक्षणत्वात्। संयोगमात्रस्य तूपादानोपादेयभावरहितयोर्द्रव्ययोः सम्बन्ध इति लक्षणं द्रष्टव्यम्। तदेवमाणवं तदनुग्राहिका रोधकशक्तिरिति पाशाख्यं सिद्धम् ॥

अथ बिन्दुर्निरूप्यते—शुद्धस्य शब्दस्य तादृशानां च तत्त्वानामुपादानं बिन्दुः। सा च जडरूपा भगवतः परिग्रहशक्तिः कुण्डलिन्यपरपर्याया। अत्रैव शिवस्य लयादिरवस्थाभेदो रुद्राणूनां [1]प्रबोधो विमुक्तिश्च। उक्तं च श्रीमत्पौष्करे—

लयादिभेदः प्रागुक्तो यदुपायौ शिवस्य तु ॥
स बिन्दुरिति मन्तव्यः सैव कुण्डलिनी मता।
किं च रुद्राणवो येन [2]बध्यन्ते यत्र वा स्थिताः।
विमुच्यन्ते यतो वायं स बिन्दुरिति गम्यताम्। इति ॥

(पौ. बिन्दु. प. श्लो. १-३)

तत्सद्भावे मानं तु अनन्तेश्वरादिशरीराणि तदाधारभूततत्त्वभुवनादिकं च सोपादानं, कार्यत्वात्, घटवत् इति। न चाश्रयासिद्धिः। कलादिक्षित्यन्तं कार्यं शरीरकर्तृकम्, दुःखानुषक्तकार्यत्वात्, सम्मत-

---

[1] बन्धो (दे). [2] बुद्ध्यन्ते (मै).

वदित्यनुमानेन समस्तमायेयकार्यकरणत्वेनानन्तेशशरीरस्य सिद्धः। तथा—तच्छरीरं भुवनवृत्ति, शरीरत्वात्, तच्च भुवनं तत्त्वजन्यं, भुवनत्वात् सम्मतवदिति तत्त्वभुवनयोरपि सिद्धिसम्भवात्। न च माययार्थान्तरत्वम्; अनन्तशरीरादेः समस्तमायाकार्यजनकतयैव सिध्द्या मायाकार्यत्वायोगात्। अन्यथा तत्रापि शरीरान्तरकल्पनाप्रसङ्गात्। तथा अनन्तेशः सविकल्पकज्ञानवानेव सन् कार्यं करोति, प्रयोज्यकर्तृत्वात्, कुलालवदित्यनुमितसविकल्पकज्ञानविषयतया शुद्धशब्दासिद्धौ तद्धेतुतयाऽपि बिन्दुसिद्धिः। न च तदीयसविकल्पकज्ञानविषयत्वमशुद्धस्यैव शब्दस्यास्त्विति वक्तुं युक्तम्; कलादिसृष्टेः पूर्वमशुद्धस्य शब्दस्यासम्भवात्। तथा शुद्धाध्ववर्तिनामवकाशप्रदातृतयापि तत्सिद्धिः। मायेयस्याकाशस्य तत्रावकाशप्रदातृत्वायोगात्। उक्तं च श्रीमत्पौष्करे—

किं च मायाद्युपादानं देहेन्द्रियकरं नृणाम्।
क्षुब्धं कार्यकरं तस्य कर्तुर्देहेन्द्रियादिकम्॥
यदुपादानतो जातं स बिन्दुरिति गम्यताम्।
किं च शब्दानुसंविद्धा जायन्ते प्रत्यया नृणाम्॥
न ह्यकारणकाः शब्दाः सम्भवेयुः कदाचन।
तेषां यत्कारणं विप्राः! स बिन्दुर्बहुवृत्तिकः॥ इति॥

(पौ. बिन्दु. प. श्लो. १२-१४)

मायापि नात्रोपादानं मोहकत्वात्स्वतेजसा।
यतः प्रबुद्धपुंकायकारणानां न कारणम्॥
शुद्धाध्ववर्तिनः सर्वे प्रबुद्धाः शिवतेजसा।
देहेन्द्रियादिमन्तोऽपि नाबुद्धास्तेषु ते पुनः॥
किं च कर्मोज्झिताः सर्वे पुद्गलाः शुद्धवर्त्मनि।
कथं कर्मानुसारेण माया परिणता सती॥

तेषां देहेन्द्रियादीनामुपादानं भवेद्द्विजाः ।
तस्माच्छुद्धाध्वनश्चास्य स्वानुकार्यैव कारणम् ॥
इष्यतां कुण्डलिन्याख्यं शुद्धमेतद्द्विजोत्तमाः ।
सा च कुण्डलिनी शम्भोः शक्तिः शुद्धा जडात्मिका ॥
न तादात्म्यात्स्थिता किं तु वर्तमाना परिग्रहे ।
शिवे कर्तरि तादात्म्यान्नेयं कुण्डलिनी स्थिता ॥
उपादानत्वतो हेतोः कुलाले मृत्तिका यथा ॥ इति ॥

(पौ. बिन्दु प. श्लो. ६-१२)

**न चात्र शिवशक्तिरेवोपादानम्; चिद्रूपत्वात्। अचितः खलु परिणामः। ननु चितो विवर्त एवास्तु; तथा च शिवशक्तिरेव तत्तदाकारेण विवर्तत इति चेन्न; तथा सति कार्यजातस्य मिथ्यात्वप्रसङ्गात्। न चेष्टापत्तिः; सर्वप्रमाणसिद्धस्य जगतस्तथात्वानुपपत्तेः। उक्तं च तत्रैव—**

नात्र शक्तिरुपादानं चिद्रूपत्वाद्यथा शिवः ।
परिणामोऽचितः प्रोक्तश्चिद्रूपस्य न युज्यते ॥
चितो विवर्त [1]एवेष्टस्तथात्वे कार्यशून्यता ।
सर्वप्रमाणसंसिद्धं चिद्विवर्तं कथं जगत् ॥ इति ॥

(पौ. बिन्दु. प. श्लो. ४-५)

**अत्र शब्दवृत्तिश्चतुर्धा, सूक्ष्मा पश्यन्ती मध्यमा वैखरी चेति। तत्र ज्ञानैकाश्रया अर्थसामान्यप्रकाशिका वाणी सूक्ष्मा। मयूराण्डरसवदविभक्तवर्णार्थविशेषबोधनाक्षमा वाणी पश्यन्ती। बुध्युपारूढवर्णा तत्क्रमविशेषोपेता प्राणवृत्त्यगोचरीभूता सैव मध्यमा। प्राणवृत्त्याऽभि-**

---

[1] एवाक्त. (मै).

व्यक्ता श्रोत्रग्राह्यार्थविशेषबोधनक्षमा सैव वैखरी । तत्र सूक्ष्मा पश्यन्त्याः, पश्यन्ती मध्यमायाः, मध्यमा वैखर्याश्च कारणं द्रष्टव्यम् । एताश्च वृत्तयोऽणूनां प्रत्ययात्मिकाः । तत्र तिस्रोन्तरेव स्थिताः । अन्या बहिः स्थिता । एते च शब्दाः शुद्धाध्वनि सूक्ष्माः, मिश्राध्वनि स्थूलाः, अशुद्धाध्वनि स्थूलतराः । तदुक्तं तत्रैव—

शब्दाश्चतुर्विधास्तेऽपि वैखर्यादिविभेदतः ।
वैखरी मध्यमाख्या च पश्यन्ती सूक्ष्मसंज्ञिता ।
वैखरी श्रोत्रविषया स्थूलवर्णपरिग्रहा ।
स्थानेष्वपि धृते वायौ प्रयोक्तुरुपकारिणी ॥
बुध्या वर्णानुसन्धानपूर्वमर्थस्य वाचिका ।
प्राणवृत्तिमतिक्रान्ता वागेषा मध्यमाह्वया ।
वर्णरूपानुसन्धानविरहान्तः समुज्ज्वला ।
मायूराण्डरसो यद्वन्निर्विशेषार्थधारिका ।
पश्यन्ती वागियं ज्ञेया तृतीया शिवशासने ।
सूक्ष्मा चिदेकशरणा निवृत्ताशेषशक्तिका ॥
वैखर्याः कारणं मध्या पश्यन्ती मध्यमां प्रति ।
पश्यन्त्याः कारण सूक्ष्मा निर्विकल्पस्वरूपिणी ॥
एताश्च वृत्तयोऽणूनां चतस्रः प्रत्ययात्मिकाः ।
अन्तरेव स्थितास्तिस्रो बहिरन्या व्यवस्थिता ॥
आगोपालाङ्गनाबालं म्लेच्छाः प्राकृतभाषिणः ।
अन्तर्जलगताः सत्त्वा[1] नित्यं जल्पन्ति ता गिरः ॥
आभ्यो न परमो बन्ध आभ्यो मुक्तिस्तु नापरा ।
तन्निवृत्त्यविनाभूतो दृक्क्रियावारको यतः ॥

---

[1] स्तेऽपि नित्य ब्रुवन्ति ताः (अ).

विविक्तान्मन्वते तेभ्यः पुद्गलाः स्वान्न कुत्र चित्।
दुःख्यहं सुख्यहं चेति मतिर्या शब्दताडिता ॥
सूक्ष्माः शुद्धाध्वनि गिरः स्थूला मिश्राध्वनि स्थिताः।
अशुद्धाध्वनि ता वाचः स्थिताः स्थूलतराः सदा ॥ इति ॥

(पौ. बिन्दु. प. श्लो. १९-३०)

[1](**किं च निवृत्त्यादिकलाहेतुत्वेनापि बिन्दुसिद्धिः। उक्तं च तत्र–**

अन्याश्च वृत्तयो बिन्दोर्निवृत्त्यादिकलात्मिकाः।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ॥
शान्त्यतीता च पञ्चैताः शुद्धमार्गे पुरात्मिकाः।
मिश्राशुद्धाध्वनोरेतास्तत्त्वाद्याधारिकाः स्थिताः ॥
वस्तुरूपाः कला ज्ञेयाः शब्दरूपाः परोदिताः।
शब्दवस्तूभयात्मासौ बिन्दुर्नान्यतरात्मकः ॥ इति ॥)

(पौ. बिन्दु. श्लो. ३०-३२)

**अत्र बिन्द्वारब्धानि शिवशक्तिसदाशिवेश्वरशुद्धविद्याख्यानि पञ्च तत्त्वानि। उक्तं च तत्रैव—**

[2](वृत्तिस्तत्त्वात्मिका चास्य चतुर्धा संव्यवस्थिता।
शिवतत्त्वं सदेशाख्यमैशं विद्याह्वय तथा। इति)

(पौ. बिन्दु. प. श्लो. ३३)

अन्याश्च वृत्तयो बिन्दोर्निवृत्त्यादिकलात्मिकाः।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च।
शान्त्यतीता च पञ्चैताः शुद्धमार्गे पुरात्मिकाः ॥ इति ॥

(पौ. बिन्दु. प. श्लो. ३०-३१)

---

1, 2 धनुरङ्कितमिदं पाठद्वयं मातृकायामनुपलब्धमपि (देवकोट्टै) शैवसङ्घात् सङ्गृहीत-कोशानुरोधेनात्र संयोजितम्।

तत्र शिवतत्त्वे सूक्ष्माभिधाना वाग्वृत्तिः । अत्रैव शान्त्यतीतभुवनानामवस्थितिः । उक्तं च—

विकल्पबोधायाणूनां तत्त्वानां स्थितये कलाः ।
पञ्च तत्त्वानि लोकांश्च मन्त्रादीनसृजच्छिवः ॥
शान्त्यतीता पुराधारं शिवतत्त्वं पुराऽभवत् ॥ इति ॥

अस्य च शिवाधिष्ठितत्वेन शिवतत्त्वव्यपदेशः। शिवतत्त्वविकारः शक्तितत्त्वम् । अत्रैव पश्यन्त्याख्याया वाग्वृत्तेः निवृत्त्यादिकलानां चावस्थानम् । अस्य च शिवशक्त्यधिष्ठानत्वेन शक्तितत्त्वपदवाच्यता । शक्तितत्त्वविकारः सदाशिवतत्त्वम् । इदमेव मध्यमाभिधानाया वाण्या अधिष्ठानम् । तथा कामिकादितन्त्रभेदकारणानां प्रणवादीनां सामीप्यादिमुक्तिभाजां च तनुभुवनादिकारणम् । सदाशिवतत्त्वविकार ईश्वरतत्त्वम् । इदं चानन्तेशादीनां तदाराधनादिना तत्पदं प्राप्तानां रुद्राणूनां च तनुभुवनादिकारणम् । ईश्वरतत्त्वविकारो विद्यातत्त्वम् । इदमेव वैखर्याख्याया वाग्वृत्तेरधिष्ठानम् । तथा करणभूतानां सप्तकोटिसंख्यानां मन्त्राणां विद्याराज्ञीनां च तनुभुवनादिसम्पादकम् ॥ उक्तं च श्रीमन्मृगेन्द्रे—

भृगुणी ब्रह्मवेताली स्थाणुमत्यम्बिका परा ।
रूपिणी नन्दिनी ज्वाला सप्त सप्तार्बुदेश्वराः ॥
विद्याराज्ञ्यः समाख्याता विद्यायां रुद्रसंस्तुताः ।
तासामुपरि दीप्तश्रीर्देवो विद्याधिपः स्थितः ॥
मन्त्रेशेशाचिदाविष्टरुद्रव्यूहाष्टकानुगः ।
उच्छुष्माश्चम्बराश्चण्डा महावीर्यपदद्रुगाः ॥
रुद्रा गणाश्च दिक्पालाः शास्त्राणि पतयःस्थिताः ।

ते चानन्तप्रभृतयो गदिता एव नामतः ।
स्वरूपतश्च ते विप्राः पूर्वं प्रश्नानुषङ्गतः ॥
सदाशिवे पवित्राङ्गः सकळादिपरिच्छदः ॥
देव. सदाशिवो बिन्दौ निवृत्त्यादिकलेश्वराः ।
नादे ध्वनिः पतिः शक्तौ सर्वशक्तिमतां वरः ॥
योनिर्विश्वस्य वागीशा. पतयः परतः शिवः ॥ इति ॥

(मृ. प्र. १३ श्लो. १५७–१६२)

अन्ये तु पञ्चानामपि शिवद्वारकं लक्षणं वदन्ति । ज्ञानमात्रयुक्तेन परमात्मनाधिष्ठितं तत्त्वं शिवतत्त्वम् । क्रियामात्रयुक्तेनाधिष्ठितं शक्तितत्त्वम् । समप्रवृत्तोभयवताधिष्ठितं सदाशिवतत्त्वम् । अधिकक्रियावताधिष्ठितमीश्वरतत्त्वम् । अधिकज्ञानवताधिष्ठितं विद्यातत्त्वमिति । केचित्तु शिवादितत्त्वपञ्चकमपि साक्षाद्बिन्दुकार्यमेवेत्याहुः । एतच्च शिवतत्त्वादिकं बिन्द्वादिविशिष्टशिवस्य वृत्तिरूपं कार्यम् । न परिणामः ; सर्वत्र कारणानुस्यूततया पूर्वावस्थापरित्यागाभावात् । नाप्यारम्भवादः पुञ्जवादो वात्र सङ्गच्छते । एकस्यैव हि शिवस्य कारणत्वेन निश्चितत्वात् । एतच्च वृत्तिरूपं कार्यं कारणात्मनैव सत् । कार्यात्मनापि सत्त्वे तत्त्वानामवस्थापायरूपप्रळयायोगात् । तत्त्वव्यपदेशस्त्वाकल्पावस्थायितया न विरुध्यते । अयं च शुद्धाध्वा न बन्धकः ; कर्मान्वयाभावात् ॥

ननु शुद्धाध्ववर्तिनां कथं विचित्रभोगः ? तद्धेतोः कर्मणोऽभावात् । कथं वा ज्ञानोदयः ? तद्धेतोः कलाया अभावात् । कथं वा विषयाभिमुख्यम् ? तद्धेतोर्विद्याया अभावात् । कथं च विषयेष्वासक्तिः ? रागाभावात् । कथं वा भोगेयत्तापरिच्छेदः ? कालाभावात् । कथं च भोक्तृविशेषनियमः ? नियतेरभावात् । उच्यते—सन्ति

तावच्छुद्धाध्वनि बैन्दवानि कलादीनि तत्त्वानि तनुकरणभुवनभोगादयश्च । तत्र यद्यपि भोगवैचित्र्यकारणं कर्म नास्ति । तथापि मलपरिपाकवशाद्विचित्रो भोगः सम्भवति । तथा हि—यस्य प्रकृष्टो मलपरिपाकः स मादाख्ये भोगं भुङ्क्ते । यस्य तु प्रकृष्टतरः स त्वीश्वरतत्त्वे विद्यातत्त्वे च । तस्मान्न कर्मात्र भोगकारणम् । किं त्वीश्वरेच्छैव । न च शिवस्यात्र वैषम्यनैर्घृण्ये; तत्र दुःखरूपभोगाभावात् । तस्माच्छुद्धाध्वनि मलपरिपाकाधीनः सुखात्मैव भोगः । उक्तं च श्रीमत्पौष्करे—

किं च कर्मान्वयाभावाच्छुद्धाध्वानो न बन्धकाः ॥ इति ॥

(पौ. बिन्दु. प. श्लो. ४३)

तथा—

अध्वायं भोग्य उद्दिष्टो भोगो रागादिभिः स्थितः ।
अत्र तेषामभावेन कथं भोगो महेश्वर ॥

ईश्वरः—

अत्रापि कालमुख्यानि सन्ति तत्त्वान्यधो यथा ।
किं तु तान्यत्र शुद्धानि बैन्दवानि द्विजोत्तमाः ॥

(पौ. बिन्दु. प. श्लो. ५६–५७)

तथा—

शुद्धान्येतानि तत्त्वानि रुद्राणूनां महात्मनाम् ।
विचित्रपुरमालाभिः खचितानि महान्ति च ॥
दिव्यश्रीभिर्महाश्चर्यैर्भोगैर्दुःखविवर्जितैः ।
तनुभोगेन्द्रियाद्यैश्च वर्जितान्युन्नतानि च ॥ इति ॥

(पौ. बिन्दु. प. श्लो. ३४–३५)

तथा—

शुद्धाध्वनि महाभोगः कर्म नास्तीति चोदितम् ।
कथं तद्वार्तिनां भोगो विचित्रस्तद्वदेश्वर ॥

ईश्वरः—

न कर्म भोगवैचित्र्ये कारण शुद्धवर्त्मनि ।
मलस्य परिपाको यो विचित्रः सोऽत्र कारणम् ॥
यस्य प्रकृष्टस्तत्पाको भोगतत्त्वे स भोगभुक् ।
इतरस्त्वीशविद्याख्यतत्त्वयोर्भोगभाग्भवेत् ॥
किं कर्मणात्र विप्रेन्द्रा यत्रेच्छाभोग इष्यते ॥ इति ॥

(पौ. बिन्दु. प. श्लो. ४५–४८)

तथा—

नैवेह शम्भोर्नैर्घृण्यं भवतीह कदाचन ॥
दुःखेषु हि नियुञ्जानो निर्घृणो नापरत्र च ।
शुद्धेऽध्वनि सुखात्मैव भोग एवं [1] ... त्र स्मृतः ॥ इति ॥

(पौ. बिन्दु. प. श्लो. ५२–५३)

**एतच्च शुद्धतत्त्वजातं प्रलयाकलसकलानां प्रेरककाण्ड इत्यभिधीयते ॥**

**अथ माया निरूप्यते—सा च मयति ददाति विश्वमिति वा, मात्यायाति विश्वमत्रेति वा अन्वर्था ॥ तदुक्तं पौष्करे—**

मयत्यस्माज्जगद्विश्वं माया तेन समीरिता ॥ इति ॥

(पौ. मा. प. श्लो. १)

अन्यत्र—

माति यत्र जगत्सुप्तौ सृष्टौ वा याति सा तत ।
माया तेन समाख्याता तत्त्वमुक्तं गुरूत्तमैः ॥ इति ॥

---

[1] समुद्धृतम् (अ).

इयमपि कलादेः पृथिव्यन्तस्य कार्यजातस्योपादानभूता जडा भगवतः परिग्रहशक्तिः। सा चैका। बहुत्वे प्रमाणाभावात्। नित्या; मूलकारणत्वात्। अनित्यत्वे प्रलये कर्मणां निराश्रयत्वप्रसङ्गात्। न च बिन्दुस्तदाश्रयः; तस्य कर्मोत्तरत्वात्। नाप्यात्मानः; तेषां जडत्वप्रसङ्गात्। सा च व्यापिनी; सर्वत्र कार्योपलम्भात्। तदुक्तं पौष्करे—

नित्यैका व्यापिनी वस्तुरूपा कर्माश्रया शिवा ॥ इति ॥

(पौ. मा. प. श्लो. २)

श्रीमन्मृगेन्द्रे च—

तदेकमशिवं बीजं जगतश्चित्रशक्तिमत्।
सहकार्यधिकारान्तसंरोधि व्याप्यनश्वरम् ॥
कर्तानुमीयते येन जगद्धर्मेण हेतुना।
तेनोपादानमप्यस्ति न पटस्तन्तुभिर्विना ॥
तदचेतनमेव स्यात्कार्यस्याचित्त्वदर्शनात्।

(मृ. प्र. ९ श्लो. २–४)

तदाधाराणि कार्याणि शक्तिरूपाणि संहृतौ ॥
विकृतौ व्यक्तिरूपाणि व्याप्रियन्तेऽर्थसिद्धये ॥ इति ॥

(मृ. प्र. ९ श्लो. १३)

तथा पौष्करे—

नित्यैषाऽशेषकार्याणां कारणत्वाद्यदन्यथा।
न तन्नित्यं यथा तन्तुस्तस्मान्मायाप्यनश्वरा ॥
अनित्यैषा यदीष्येत कर्मणां कुत्र संस्थितिः।
न बिन्दुः कर्मणां स्थानं बिन्दुः कर्मोत्तरो यतः ॥
न चात्मनि स्थितिस्तेषां यस्मादात्मा जडो भवेत् ॥ इति ॥

(पौ. मा. प. श्लो. २७-२९)

अस्याश्च विचित्रशक्तित्वं विचित्रकार्यजनकतया। अनात्मनि देहादावात्मभ्रमहेतुतया मोहिनीत्वं च। एषा च सर्वेषां सकलानां साधारणी, प्रलये लीनदेहानां तेषां सूक्ष्मस्थूलात्मकदेहादेः कारणम्। उक्तं च पौष्करे—

साधारणी च सर्वेषां सकलानां मुनीश्वराः।
प्रळये लीनदेहस्य कर्मिणोऽणोरहर्मुखे ॥
देहादेः कारणं माया सूक्ष्मस्थूलात्मकस्य तु ॥ इति ॥

(पौ. मा. प. श्लो. २–३)

इयं च वस्तुरूपा; वस्त्वात्मकस्य जगतः कारणत्वात्। ननु प्रपञ्चस्य वस्त्वात्मकत्वमसिद्धम्; प्रमाणप्रमेयसम्बन्धानां दुर्निरूपत्वात्। तथा हि—न तावत्प्रत्यक्षम्; प्रमात्रादिभेदरूपस्येतरनिषेधस्य घटमहं जानामीति विधिविषयकप्रत्यक्षविषयत्वाभावात्। अतः प्रमातृभिन्नप्रमेयसद्भावे न प्रत्यक्षं प्रमाणम्। व्याप्तेरपि तन्मूलत्वेनानुमानमपि नात्र प्रमाणम्। प्रत्यक्षादिविरुद्धविषयस्यागमस्य ग्रावप्लवनादिवाक्यवन्न स्वार्थे प्रामाण्यम्। तस्मात्प्रपञ्चसद्भावे न किंचिन्मानम्। अस्तु वा प्रमाणप्रमेयसद्भावः; कस्तयोः सम्बन्धः? न तावत्तादात्म्यलक्षणः; प्रमाणघटयोस्तादात्म्यस्य केनाप्यनङ्गीकारात्। नापि कार्यकारणभावलक्षणः सम्बन्धः; तथात्वे स्वप्नज्ञानजनकस्य स्वाप्निकपदार्थस्य सत्यत्वप्रसङ्गः। तस्मात्प्रपञ्चमिथ्यात्वे तन्मूलभूतमायापि मिथ्येति। अत्रोच्यते—अस्ति तावत्सत्यप्रमेयगोचरं प्रत्यक्षम्। तथा हि—स्थाणुर्वा पुरुषो वेति संशये नायं पुरुषः, स्थाणुरेवेति कोट्यन्तरनिषेधपुरस्सरं जायमानं प्रत्यक्षं कथं न तद्भेदगोचरम्? न चास्य सविकल्पत्वेन भ्रान्तत्वम्; बाधाभावात्। न हि वक्रकोटरादिमत्त्वेन स्थाणुत्वे निश्चिते तस्य कदाचिद्बाधः सम्भवति। न च रज्जु-

सर्पादावेवं बाधाभावः। तस्य सर्वलोकसिद्धत्वात्। किं च रज्जुसर्पयोः साम्येन भ्रान्तिस्तत्र सम्भवति। चैतन्यस्य घटादिरूपतया प्रतीतौ न किञ्चन सादृश्यं पश्यामः। अपि च प्रमेयस्य निर्विकल्पकाविषयत्वेऽपि भेदप्रत्यक्षासिद्धिः। अन्यथा अगृहीतभेदस्य पुंसो देवदत्तो ब्राह्मणोऽयमिति व्यावृत्तविषयकमुत्तरं सविकल्पकं कथं जायेत। किंच प्रपञ्चमिथ्यात्वगोचरं प्रमाणं मिथ्या वा न वा? आद्ये प्रपञ्चस्य सत्यत्वं सिद्धम्। द्वितीये तु मिथ्यात्वहेतोस्तत्र व्यभिचारः। तस्मात्प्रपञ्चस्य सत्यत्वं सिद्धम्। न च ज्ञानज्ञेययोः सम्बन्धानुपपत्तिः; विषयविषयिभावस्य सम्बन्धस्य विद्यमानत्वात्। तस्मात्सर्वस्य जगतः सत्यत्वात्तन्मूलभूतमायापि सत्येति सिद्धम्॥ तदुक्तं श्रीमत्पौष्करे—

न हि प्रपञ्चो वस्त्वात्मा प्रमाणानामभावतः।
प्रमेयाभावतस्तद्वत्सम्बन्धाभावतोऽपि च॥
प्रपञ्चोऽयं प्रमात्रादिभेदात्मा नाक्षगोचरः।
यतः प्रत्यक्षमर्थानां विधातृ न निषेधकम्॥
निषेधमन्तरा भेदो न समस्ति कदाचन।
तस्मात्प्रपञ्चसद्भावे प्रत्यक्षं न तु साधकम्॥
व्याप्तेस्तत्पूर्वकत्वेन नानुमानमपि प्रमा।
प्रत्यक्षादिविरुद्धेऽर्थे नागमस्य प्रमाणता॥
तस्मात्प्रमेयाभावोऽपि प्रमाणाभावतः स्थितः।
अस्तु मानं प्रमेयं च सम्बन्धो दुर्लभस्तयोः॥
न तावज्ज्ञानघटयोर्योगस्तादात्म्यलक्षणः।
ज्ञानस्याभ्यन्तरत्वेन घटश्चाभ्यन्तरो भवेत्॥
नोत्पाद्योत्पादकात्मापि स्वप्नेऽप्यर्थस्तु सन् भवेत्।
एवं प्रपञ्चावस्तुत्वे वस्तु माया कथं भवेत्॥

ईश्वरः—

अस्ति प्रमाणं सद्भावे प्रपञ्चस्य पुरातनम् ।
प्रत्यक्षं तावदर्थानां प्रमाणं भेदगोचरम् ॥
स्थाणुर्वा पुरुषो वेति सन्देहे स्थाणुरेव सः ।
पुरुषो नेति भेदात्मा दृश्यते प्रत्ययोऽक्षतः ॥
भ्रान्तोऽयं सविकल्पत्वाद्रज्जुवन्नेष्यतामिति ।
सर्वेषां सर्वदा कुम्भः कुम्भ एवेष्यतेऽक्षतः ॥
नैवं रज्जुः कदाचित्तु यतः सर्पायते नृणाम् ।
मालायते तदन्येषां नैवं कुम्भघटादयः ॥
किं चाहिरज्ज्वोस्साम्येन भ्रान्तिरत्रोपपद्यते ।
चितो घटादिरूपेण प्रतीतौ का समानता ॥
निर्विकल्पाक्षबोधेऽपि भेदात्मा प्रत्ययः स्थितः ।
अन्यथोत्तरविज्ञानं व्यावृत्तं नोपजायते ॥
अगृहीतार्थभेदस्य तन्नामादिविशेषवत् ।
किं च येन प्रमाणेन प्रपञ्चाभाव उच्यते ॥
तत्प्रमाणं प्रमाणं वा न वेति परिचिन्त्यताम् ।
प्रमाणं चेत्प्रपञ्चोऽस्ति तत्तदन्तर्गतं यतः ॥
यद्यप्रमाण सुतरां भावरूपं जगद्भवेत् ।
सम्बन्धो ज्ञानघटयोर्ज्ञाप्यज्ञापकलक्षणः ॥
एवं वस्त्वात्मकं विश्वं भवेत्कथमवस्तुजम् ।
तस्माद्वस्त्वात्मिका माया स्थिता विश्वस्य कारिणी ॥ इति ॥

(पौ. मा. प. श्लो. १०–२६)

**अस्याः सद्भावे मानं तु कलादिक्षितिपर्यन्तं तत्त्वजातमविभागेन कारणे कुत्रचित्प्रलीनम्, एकस्य कार्यत्वे सति विभक्तत्वात्, बीजे स्कन्धपलाशादिवत्; कलादिकं सोपादानम्, कार्यत्वात्, घटवत्;**

प्रळयकालीनं कर्म किंचिदाश्रितम्, संस्कारत्वात्, सम्मतवदित्याद्यनुमानानि। न च कालेनार्थान्तरत्वम्; कालस्य वक्ष्यमाणरीत्या विनाशित्वेन तदानीमाश्रयत्वायोगात्। ननु कर्मणि सिद्धे तदाश्रयत्वेन मायासिद्धिः, तत्सद्भावे किं मानम्? उच्यते—प्राणिनां सुखदुःखभोगः किंचिदायत्तः, अस्वाभाविकत्वात्, पाकजरूपवत्, इष्टापूर्तादिकं फलोत्पत्तिप्राक्क्षणवर्तिव्यापारकम्, तदुत्पत्तिपूर्वं विनष्टत्वे सति तज्जनकत्वात्, कृषिचिकित्सादिवदिति। न चेश्वरप्रसाद एव व्यापारोऽस्त्विति युक्तम्; तस्याविळम्बितत्वेन फलजनकतया समनन्तरमेव फलोत्पत्तिप्रसङ्गात्॥ उक्तं च पौष्करे—

अविशिष्टे तु भोक्तृत्वे भुञ्जते दिवि केचन।
केचनावीचिमुख्येषु न स्यादेतदहेतुकम्॥
यत्तत्र हेतु कर्मेति मन्तव्यं मुनिपुङ्गवाः।
उभयोः कृषिसाम्ये तु कश्चिद्धान्यानि यच्छति॥
न किंचिदपरस्तस्य कर्म कारणकं द्विजाः॥ इति।

(पौ. मा. प. श्लो. ३१-३३)

न च तत्प्रकृतिजन्यमिति वाच्यम्; प्रकृतेर्भोग्यत्वेन भोजकत्वायोगात्। ननु प्राकृतमेव बुद्धिधर्मरूपं कर्म, भावात्मतया भोग्यम्, कर्मात्मकतया भोजकमस्त्विति चेत्, बुद्धिधर्मरूपस्य तस्य भावमात्रात्मकत्वात्। तेषां च साम्याभावेन केनचित्प्रयोजकेन भवितव्यम्। न च स्वयमेव स्वस्य प्रयोजकमिति वाच्यम्; स्वात्मनि क्रियाविरोधात्। तथा चोक्तं पौष्करे—

न चात्र प्रकृतिर्हेतुर्भोग्यत्वेन विरोधतः।
यद्भोग्यं भोजकं नैकं तस्मात्कर्मान्यदिष्यताम्॥

प्रकृतेः परिणामो यो बौद्धो भावाष्टकात्मकः ।
स स्यात्कर्मात्मकोऽन्यस्तु भोग्यः स्यादिति चेन्मतिः ॥
तदप्यसारं भावानां प्रत्ययात्मकता यतः ।
प्रत्ययास्ते च विविधा दृश्यन्तेऽणुषु सर्वदा ॥
न समास्तत्र केनापि हेतुना भाव्यमग्रजाः ।
न च स्वयं स्ववैविध्ये हेतवस्त्वनवस्थितेः ॥ इति ॥

(पौ. मा. प. श्लो. ३३-३७)

एतच्च कर्म त्रिविधम्। मनोवाक्कायरूपकारणभेदात्। तत्र मनोजन्यमिष्टदेवतानुध्यानपरस्त्रीजिहीर्षादिरूपम्। वाचिकं मन्त्रजपपरापवादादिरूपम्। कायिकं देवतार्चनाऽगम्यागमनादिरूपम्। तथा तत्र कारणत्रैविध्यात् त्रिविधकर्मकार्यं च सुखदुःखादिकमाध्यात्मिकादिभेदेन त्रिविधम्। तत्र चित्तप्रसादोद्वेगादिकमाध्यात्मिकम्। चन्दनानुलेपनखड्गघातादिजन्यमाधिभौतिकम्। अभिमतानभिमतवर्षातपादिजन्यमाधिदैविकम्। तथा लौकिकवैदिकाध्यात्मिकाधिमार्गिकमान्त्रभेदेन पञ्चविधं कर्म। तत्र वापीकूपादिनिर्माणाभक्ष्यभक्षणादिजनितं निवृत्तिकलाव्याप्ताध्वावधिभोगस्य तद्धेतुशरीरादेश्च जनकं लौकिकम्। ज्योतिष्टोमाद्यनुष्ठानजनितं प्रतिष्ठाकलाव्याप्ताध्वावधिभोगजनकं वैदिकम्। वैराग्यादिजन्यं विद्याकलाव्याप्ताध्वावधिभोगजनकं आध्यात्मिकम्। योगजन्यं शान्तिकलाव्याप्ताध्वावधिभोगजनकमाधिमार्गिकम्। विज्ञानजन्यं शान्त्यतीतकलाव्याप्ताध्वावधिभोगजनकं मान्त्रम्। तदेतत्पञ्चविधमपि कर्म वैषयिकसुखदुःखादिहेतुतया पाशः। एतत्कर्माश्रयत्वेन सिद्धाया मायायाः साक्षात्परम्परया च जातानि कलादीन्येकत्रिंशत्तत्त्वानि। तत्र भोगेयत्तापरिच्छेदात्मकस्य कलनस्य हेतुः कालः लवत्रुटयादिप्रतीतिविशेष्यो

मायायाः प्राथमिको विकारः । केचित्तु कलैव प्रथमो विकार इत्याहुः । अयं च सृष्टिकालः स्थितिकालः संहारकालश्चेति त्रिविधः ॥

नन्वस्य कथं कार्यत्वम्? एकत्वे सति प्रवाहानादिकार्यजनकत्वेनानादित्वात् । न च विशेषणासिद्धिः; भेदे मानाभावेन लाघवसहकृतेन मानेन कालसिद्धौ तदेकत्वस्यापि सिद्धेः । अत एव जडत्वे सत्यनेकत्वेन कार्यत्वमस्यानुमीयत इत्यपि न युक्तम्; विशेष्यासिद्धेः । न च पूर्वापरादिभेदः कालेऽनुभूयत इति वाच्यम्; य एव पूर्वः स एवान्यदा पर इति पूर्वापरादिभेदस्यौपाधिकत्वावश्यंभावात् । तस्मात्कालोऽनादिरेवेति, मैवम्; कालभेदस्यौपाधिकत्वे सर्वत्रोपाधिनैव तत्तत्कार्योपपत्त्या कालस्यैवासिद्धिप्रसङ्गात्, कालस्यैकत्वेऽधिकरणत्वेन तस्य सर्वकार्यहेतुतया कालविशेषव्यतिरेकप्रयुक्तस्य कार्यविशेषव्यतिरेकस्यानुपपत्तिप्रसङ्गाच्च । क्षणलवादिभेदे उपाधेरभावाच्च । तस्मात्कालस्य स्वाभाविक एव भेदः । अत एव जडत्वे सत्यनेकत्वादुत्पत्तिविनाशावपि ॥

नन्वेवं कथमात्मनां नित्यत्वम्? नित्यकालवृत्तित्वस्यैव नित्यशब्दार्थत्वादिति चेत्, न; कालावच्छेदराहित्यस्यैव तदर्थत्वेनात्मनां नित्यत्वसम्भवात् । तदुक्तम् पौष्करे—

कलादिभिस्त्रिभिस्तत्त्वैः प्रवृत्तं पुरुषं ततः ।
लवत्रुट्यादिभिः कालः कलयत्यात्मवृत्तिभिः ॥
ताश्च [1] भौवनदेहोर्ध्वमेव यस्मात्क्रियास्तदा ।
अतीतवर्तमानेष्यद्वृत्तीनां कारणं तु यत् ॥
स काल इति मन्तव्यो भोग्यार्थोत्पादको नृणाम् ॥ इति ॥

(पौ. पाश. प. श्लो. ४७-४९)

---

[1] भौवनदेहोर्ध्वा. (अ)

तथा—

काल एको विभुर्नित्य इष्यते कैश्चिदीश्वर ।
तथा किमिति नेष्टोऽत्र भगवन्वक्तुमर्हसि ॥

ईश्वरः—

काल एको यदीष्येत क्रियातो नातिरिच्यते ।
यस्मात्स्वतः क्रियायास्तु नास्त्यतीतादिरूपता ॥
तस्या एव यदीष्येत सैव कालः प्रसज्यते ।
ततश्च वर्तमानादिपदार्थानां मुनीश्वराः ॥
वर्तमानादिरूपैस्तु कालैर्भिन्नैर्व्यवस्थितिः ।
ततश्च नैकः कालोऽयं किंत्वनन्तात्मवृत्तिकः ॥ इति ॥

(पौ. पाश. प. श्लो. ५३-५६)

तथा—

जडत्वे सत्यनेकत्वान्न नित्योऽयं यथा घटः ।
अनित्यस्य सतस्तस्य विभुत्वं विनिवारितम् ॥ इति ॥

(पौ. पाश. प. श्लो. ६१)

ऋषयः—

अनित्यः काल उद्दिष्टस्तत्कथं नित्यतात्मनाम् ।
नित्यकालानुवर्तित्वं नित्यत्वं तद्वदेश्वर ॥

ईश्वरः—

कालावच्छेदशून्यत्वान्नित्यत्वं कालवस्थितम् ।
न हि कालस्य नित्यत्वं कालवस्त्वनवस्थितेः ॥ इति ॥

(पौ. पाश. प. श्लो. ६४–६५)

**न च महार्थसंहारे कालस्याप्युपसंहारात्तत्रापि कालान्तरापेक्षेति वाच्यम्; ईश्वरेच्छयैव तदुपपत्तेः। तदुक्तं तत्रैव—**

ऋषयः—

मायोत्थत्वेन कालस्य विनाशित्वं व्यवस्थितम् ।
कथं महार्थसंहारे नियमः कालतो भवेत् ॥

ईश्वरः—

* स्वेच्छयैवोपसहारे नियमं विदधाति सः ।
ततः क्रियोपसंहारे कालापेक्षा न संमता ॥
प्रळयेऽप्यनुगृह्णाति सृजत्यवति हन्ति च ।
तिरोदधाति भगवान्न कालापेक्षया सदा ॥ इति ॥

(पौ. पाश. प. श्लो. ६८-७०-७१)

दिक्तु न तत्त्वान्तरं स्यात्; प्रेरकभोगभोग्यकाण्डेषु नियमेनापेक्षाऽभावात् ॥

ननु किं सर्वात्मना दिशो न सन्त्येव? न; तास्तु सूर्याद्युपाधिघटिताः साधारणाः प्रतिपदार्थापेक्षया असाधारणाश्च धर्माधर्मव्यवस्थार्थमङ्गीक्रियन्ते ॥

नियमनस्य कारणं तत्त्वं नियतिः । इयं च मायाया एव द्वितीयो विकारः । नियमनं तु दुष्कर्मकर्तुस्तत्फलेन योजनम्, सुकृतफलस्याकर्तृसम्बन्धव्यावर्तनम्, तच्छरीरादेः पुरुषान्तरसम्बन्धिभोगाजननं च । इदमेव कार्यं नियतितत्त्वे प्रमाणम् । नियतितत्त्वाभावे हि दुष्कृतफलं न कश्चिदपि भुञ्जीत । परकृतस्यापि सुकृतस्य फलमपरो भुञ्जीत । यज्ञदत्तशरीरमपि देवदत्तस्य भोगं जनयेत् ।

ननु दुष्कृतस्य फलजनकत्वनियमात्तदनुपभोगो ह्यप्रसक्त एव । न हि सामग्रीसत्त्वे कार्याभावप्रसक्तिवारणाय तत्त्वान्तरमुपेयते । न च दुष्कृतस्य फलजनकत्वनियमोऽसिद्धः; निषेधकशास्त्र-

---

* अत्र मुद्रितपौष्करागमे—ईश्वर इत्यत. पर—
तदसत्प्रलयस्यास्य नियमो नहि कालत. ।
किं तु भोगेषु खिन्नाना विश्रान्त्यर्थं महेश्वर· ॥
इत्यधिकः पाठो दृश्यते.

स्यैव तत्र मानत्वात्। एवं सुकृतस्यापि कर्तृगतं फलं प्रत्येव स्वरूपयोग्यत्वादकर्तुः फलभोगोऽप्रसक्तः। अतो न तत्त्वान्तरं तद्वारणायाङ्गीकर्तव्यम्। न हि जलस्य दाहकत्ववारणाय तत्त्वान्तरं स्वीक्रियते। न च तस्य जनकत्वं कर्तृगतफलं प्रत्येवेत्यसिद्धम्; कर्तृगामिफले विहितेनात्मनेपदेन तत्सिद्धेः; "कर्ता शास्त्रार्थवत्त्वात्" (ब्र. सू. २-३-३३) इत्यादिन्यायेन तत्सिद्धेश्च। अन्यथा अनुष्ठानस्य वैफल्यप्रसङ्गाच्च। एवं शरीरस्यापि तत्तत्कर्मार्जितत्वेनैव तत्तद्भोगजनकत्वनियम उपपद्यत इति न तदनुरोधेनापि नियतितत्त्वसिद्धिः। तस्मादन्यथासिद्धत्वान्नियमस्य न तादर्थ्येन नियतिरङ्गीकार्येति, मैवम्; दुष्कृतस्य फलजनकत्वनियमेऽपि न कर्तुः फलभोगनियमः; अन्यस्य फलसम्बन्धेनापि तदुपपत्तेः। एवं सुकृतस्यापि फलजनकत्वमात्रं श्रुत्या अवधारितम्, न तु कर्तरि फलसम्बन्धप्रापकत्वमपि। नन्वात्मनेपदादिना फलस्य कर्तृसम्बन्धोऽवधारित इति चेत्—सत्यम्। अत एव तत्कारणतया नियतितत्त्वमुपेयम्। न च कर्मैव तत्रापि जनकम्; कृष्यादेः सस्यादिकं प्रतीव तस्य फलस्वरूपजनन एव चरितार्थत्वात्; पुरुषविशेषसंबन्धप्रापणाय राजाज्ञादेरिव नियतेरप्यपेक्षितत्वात्। एवं शरीरस्यापि तत्तत्कर्मार्जितत्वेऽपि न नियत्यभावे नियम उपपद्यते। राजाज्ञाभावे तत्तत्कृष्यार्जितस्यापि सस्यादेस्तत्तद्भोगजनकत्वादर्शनात्। ननु सर्वमपीदं नियमनं शिवशक्त्यैव भवतीति नियतिर्व्यर्थेति चेन्न; तस्य क्लृप्ततत्तत्कारणसाहित्येन तत्तत्कार्यजनकतया केवलायास्तज्जनकत्वायोगात्। तस्मान्नियमनाय नियतित्वमङ्गीकार्यम्।

नन्वातिवाहिकशरीरानुप्रविष्टेऽसाधारणे नियतितत्त्वे नियमनहेतुत्वसद्भावेऽपि साधारणस्य भुवनाद्याधारस्य न तद्धेतुत्वमिति कथं नियतितत्त्वं? तत्सद्भावे वा किं मानमिति चेन्न; तज्जातीयत्वेन

**तस्यापि नियमनजनकत्वात्। तत्सद्भावे त्वागम एव मानम्। तदुक्तं श्रीमत्पौष्करे—**

समासेनाथ नियतिं शृणुध्वं मुनिपुङ्गवाः।
भोगायाभिप्रवृत्तस्य कलाविद्यादिवृत्तिभिः॥
कर्मणामार्जितानां तु फलापहरणे सति।
तद्विनाशे प्रवृत्तेयं नियतिः शिवशासने॥
न तद्वन्नियमेनापि मलमायाख्यकर्मणाम्।
प्रवृत्ता किं तु तद्युक्तपुरुषस्यैव हे द्विजाः॥
अपि भोगेष्वनिच्छन्तं नियोजयति सा बलात्।
स्वार्जितेष्वेव नेहान्यैरार्जितेषु कदाचन॥
यदि सा न भवेदन्ये भुञ्जीरन्नार्जित परैः।
राजाज्ञामन्तरा यद्वद्भुञ्जते दस्यव परैः॥
आर्जितानि तथैवेयमसामञ्जस्यनाशिका।
अनया नियतं तच्च यच्छरीरेन्द्रियादिकम्॥
अथ चेच्छाङ्करी शक्तिर्या सैव स्यान्नियामिका।
सत्यं न सा स्वतः किं तु नियतिव्यवधानतः॥
तत्सम्बन्धाद्विमुच्येरन् सैव चेन्नियतिर्यदि।
न कर्म स्वफलं पुंसां सम्बन्धयितुमर्हति॥
कर्मत्वात्कृषिवत्तस्मान्नेह कर्म नियामकम्॥इति॥

(पौ. पाश. प. श्लो. ७९-८७)

**आत्मनो दृक्क्रियारूपचैतन्याभिव्यञ्जकं तत्त्वं कला। अभिव्यक्तिश्चाच्छादकमलनिवृत्तिः। सापि नाच्छादकस्य स्वरूपविनाशः; किं त्वाच्छादनशक्तिविनाशेन तद्विशिष्टशक्तानिवृत्तिः। शैवालोदकन्यायेन कार्याक्षमत्वम्। एतत्सद्भावे मानं तु चैतन्याच्छादकस्य निवृत्तिः**

असाधारणाकिञ्चिदायत्ता, कार्यत्वात्, संमतवत्, इत्यनुमानम्। अदृष्टादेः साधारणत्वान्न तेनार्थान्तरत्वम्। इयं च पुंसां कर्मानुसारेण मलस्यैकदेशनिवर्तनं करोति। उक्तं च—

चैतन्य ज्ञत्वकर्तृत्वरूपं तद्बलमात्मनः।
कलया व्यज्यते तत्तु तस्यैव हि तिरस्कृतम्॥
सर्वात्मना कला नैतच्चैतन्यं व्यञ्जयत्यणोः।
किं तु कर्मानुसारेण कला वृत्त्यैकदेशतः॥ इति॥

ननु दृक्क्रियाशक्त्यभिव्यक्तिर्बुद्धिधर्मेण यत्नेन भवतु; यत्नस्य चाभिव्यञ्जकत्वं त्वयाप्यभ्युपेयम्; अन्यथा मृत्पिण्डादिगोचरयत्नं विनापि कलामात्रेण दृक्क्रियाभिव्यक्त्या कुलालादेर्घटादिकर्तृत्वापत्तेरिति चेन्न; तस्य दृक्क्रियाशक्त्यभिव्यक्त्यनन्तरभावित्वेनाभिव्यञ्जकत्वानुपपत्तेः। तथा हि—मृत्पिण्डादिगोचरो यत्नो मृदादिगोचरेण ज्ञानेन। तदपि मनोव्यापारेण। सोऽपि तद्गोचरेणाधिष्ठानेन। अधिष्ठानं चाभिव्यक्तदृक्क्रियाशक्तिरूपम्। न च तदभिव्यक्तिर्यत्नेन सम्भवति; यत्नस्याप्यभिव्यक्त्यधीनमनोव्यापाराधीनत्वात्। तस्मादन्यत्र यत्नस्य दृक्क्रियाशक्त्यभिव्यञ्जकत्वेऽपि प्राथमिके मनोव्यापारादौ कलाया एव दृक्क्रियाशक्त्यभिव्यञ्जकत्वमभ्युपेयम्। तस्माद्दृक्क्रियाशक्त्यभिव्यक्तये कलातत्त्वमभ्युपेयम्॥

कलोद्दलितचैतन्यानां पुंसां विषयेषु प्रवर्तकं तत्त्वं विद्या। बुद्धिसंवेदनं सकरणम्, क्रियात्वात्, संमतवदित्यनुमानेनेयं सिद्धा। तदुक्तं श्रीमत्पौष्करे—

कलया कर्तृभूतस्य बुद्धिलक्षणकर्मणः।
आलोकने यत्करणं सा विद्या शिवशासने॥

बुद्धिर्हि कर्म ग्राह्यत्वादात्मनो घटकुड्यवत् ।
ग्राह्यं करणसापेक्षं दृष्टं रूपादिक यथा ॥
ततस्तु चक्षुराद्यैश्च क्रमेणार्थे विनिश्चिते ।
बुद्ध्यन्तैर्निश्चितार्थैस्तां पुमान् संवेत्ति विद्यया ॥ इति ॥

(पौ. पाश. प. श्लो. ९-११)

न च मनसा अर्थान्तरत्वम् । तद्व्यापारस्य बुद्धिव्यापाराधीननिश्चयायत्तत्वात् । बुद्धिव्यापारस्य च बुद्धिसंवेदनायत्तत्वात् । तस्माद्बुद्धिसंवेदनस्य मनोव्यापारात्पूर्वभावितया न तत्र मनो जनकम् । मनसः सङ्कल्पादिमात्रहेतुत्वेनैव सिद्धत्वाच्च । यद्यपि चिच्छक्त्यभिव्यक्तौ बुद्धिप्रकाशो हेतुतयाऽवश्यं कल्पनीयः; तथापि बुद्धिप्रकाशानुकूलेन्द्रियादिगोचरचिच्छक्त्यभिव्यक्त्यादौ विद्यैव हेतुः ॥

विषयानुरञ्जकं तत्त्वं रागः । तदुक्तं श्रीमत्पौष्करे—

कलातो जायते रागः सद्यः पुंसां प्रवृत्तये ।
अनिच्छन्नहि भुञ्जानो दृश्यते क्वचिदप्यणुः ।
रागाद्भोग्येषु सक्तत्वाद्भोग्य भोक्तुमतोऽर्हति ॥ इति ॥

(पौ. पाश. प. श्लो. २६-२७)

अयं च प्राथमिकेन्द्रियादिव्यापारानुकूलेच्छाशक्त्यभिव्यञ्जकत्वेन सिद्धः । अन्यत्र बुद्धिधर्मस्याभिषङ्गाभिव्यञ्जकत्वेऽपि तत्र रागतत्त्वस्यैव व्यञ्जकत्वात् । तथा बुद्धिधर्मस्याभिषङ्गहेतुत्वेनापि तत्सिद्धिर्द्रष्टव्या ॥

ननु तत्र सुखादिसाधनताज्ञानमेव जनकम् । न च विरक्तस्य तस्मिन्सत्यपि अभिषङ्गो नोपलभ्यत इति युक्तम्; तत्र तस्य विषयदोषदर्शनादिना तदनुत्पत्तेस्त्वयाप्यभ्युपेयत्वात् । अन्यथा रागतत्त्वेन तत्र तस्य त्वन्मतेऽप्यभिषङ्गोत्पत्तेरप्रतीकारात् । नियतविषया-

भिलाषं प्रति रागतत्त्वस्य हेतुत्वायोगेन सुखादिसाधनताज्ञानस्यैव हेतुत्वौचित्याच्च । तस्माद्बुद्धिधर्मोऽभिषङ्गो विषयसौन्दर्यायत्तो न रागतत्त्वाधीन इति, मैवम्; विषयसौन्दर्याधीनस्यापि विषयविशेषाभिषङ्गस्य माञ्जिष्ठकादिरागस्य त्रिफलाकषाया[1]धीनत्ववदिच्छाशक्तिसामान्याभिव्यञ्जकरागतत्त्वाधीनत्वात् ॥

आत्मनः प्रकृतिभोक्तृत्वप्रयोजकं तत्त्वं पुरुषतत्त्वम् । इदं च कलादिपञ्चकञ्चुकेनाविद्यया चारब्धम् । एतच्च सकलस्यैवाणोर्भोजकं । न विज्ञानप्रळयकलयोः । तयोः कलादिसंस्पर्शाभावात् । न च कलादिकमेव तत्र प्रयोजकमस्तु, किमन्तरा तत्त्वान्तरेणेति वाच्यम् । तस्य कार्यान्तरजनकतयैव क्लृप्तत्वादिहापि तस्यैव प्रयोजकत्वे तत्त्वसाङ्कर्यप्रसङ्गात्; विज्ञानाकलस्येव सकलस्यापि भोक्तृत्वायोगाच्च । नाप्यविद्यादिः पुंस्त्वप्रयोजकः; कलाद्यभावे पुंसः कर्तृत्वायोगात् । तस्मात्प्राकृताविद्यादिसहितकलाद्यारब्धं प्राकृतभोगप्रयोजकं पुंस्तत्त्वमभ्युपेयम् । उक्तं च श्रीमत्पौष्करे—

पञ्चकञ्चुकसयुक्तः प्रकृतिं भोक्तुमुद्यतः ।
अविद्यादिसमायुक्तः पुरुषः परिकीर्तितः ॥
न विज्ञानाकलस्तेन नापि प्रळयकेवलः ।
पुरुषाख्यां लभेद्यस्मान्नाविद्यादिविवर्जितः ॥
तस्मात्सकल एवाणुर्लभते पुरुषाह्वयम् ।
कलादिपञ्चकस्यैव यदि पुंस्त्वे निमित्तता ॥
तदा प्रकृतिभोक्तृत्व न स्याज्ज्ञानाकले यथा ।
तथाऽविद्यादिमात्रस्य नापि पुंस्त्वे निमित्तता ॥
कलाद्यभावे कर्तृत्वाभावाद्भोक्ता कथं भवेत् ।

---

[1] काषायरागाधीन (दे).

प्राकृतो यस्त्वविद्यादिः पुंसां पुंस्त्वमलः स्मृतः ॥
तदाक्रान्तः कलाद्याढ्यः पुरुषस्तेन संमतः ॥ इति ॥

(पौ. पुंस्त्व. प. श्लो. १–६)

प्रयोगश्च—अणोः प्रकृतिभोगः प्रतिनियताकिञ्चिदायत्तः, कार्यत्वात्, संमतवदिति । इदं च तत्त्वं प्रतिपुरुषनियतमेव ॥

ननु दीक्षायां पुंस्तत्त्वे भुवनान्युक्तानि । कथं तेषां तत्रावस्थानमिति चेदुच्यते । गङ्गायां घोष इत्यादिवद्भोग्यतया पुरुषसन्निकृष्टायाः प्रकृतेर्मस्तक एव तेषामवस्थानसम्भवात् । उक्तं च तत्र—

दीक्षायां च पुरा पुंसि भुवनान्युदितानि हि ।
कथमत्र स्थितिस्तेषां छिन्धि सन्देहजं तमः ॥

ईश्वरः—

यत्र लक्षणया वृत्त्या भुवनस्थितिरीरिता ।
ततस्तत्प्रान्तवर्तिन्यां प्रकृतावेव कल्प्यताम् ॥
गङ्गायां ग्राम इत्युक्ते तत्तटे कल्प्यते यथा ॥ इति ॥

(पौ. पुंस्त्व. प. श्लो. ७-९)

एतानि मायादीनि पुरुषान्तानि सप्त तत्त्वानि शुद्धाशुद्धरूपाणि भोजयितृकाण्ड इत्यभिधीयन्ते ॥

गुणादिपृथिव्यन्तमूलोपादानं प्रकृतिः । इयं च श्रीकण्ठशक्तिक्षोभ्या कलातो जायते ॥

ननु गुणोपादानं न प्रकृतिः; किं तु साम्यावस्थां प्राप्ता गुणा एव । ते च परमकारणम् । कार्यत्वे मानाभावात् । तत एव महदहङ्कारादयः प्रकृतिविकृतिरूपा जायन्त इति चेन्न; गुणानां जडत्वे सत्यनेकत्वेन कार्यतया परमकारणत्वायोगात् । न च गुणानां नानात्वेऽपि तेषां साम्यमेकमेव । तदेव च प्रकृतिरिति युक्तम्; साम्य-

स्यैकत्वेऽपि गुणानां नानात्वेनोपादानसापेक्षतया उपादानान्तरस्य कल्पनीयत्वात् । गुणवैषम्ये सति साम्यस्योपादानस्य निवृत्त्या कार्यस्यापि निवृत्तिप्रसङ्गाच्च । तेषां गुणत्वान्न तत्त्वेषु गणना । उक्तं च

गुणादिक्षितिपर्यन्तं तत्त्वजातं यतो भवेत् ।
तदव्यक्तमिति प्रोक्तं क्षोभ्यं श्रीकण्ठविक्रमैः ॥

ऋषयः—

गुणा एव समावस्थां प्राप्ताः प्रकृतिरुच्यते ।
तत्कथं तदुपादानं प्रकृतिः प्रतिपाद्यते ॥

ईश्वरः—

न गुणानां समावस्था प्रकृतिः शिवशासने ।
अचेतनत्वेऽनैकत्वाद्गुणानां मुनिपुङ्गवाः ॥
. ष्टं कारणपूर्वत्वं तत्तु प्रकृतिसंज्ञितम् ॥ इति ॥

(पौ. पुंस्त्व. प. श्लो. १८–२१)

एतानि कलादिपर्यन्तानि सप्त तत्त्वानि भोजयितृकाण्ड इत्युच्यन्ते । अस्मादेव प्रकृतितत्त्वाद्वैषम्योन्मुखगुणत्रयरूपं ज्ञानोल्लेखमात्रजनकं गुणाव्यक्तापरपर्यायं चित्ताख्यं तत्त्वमुत्पद्यते । चित्तं महान् गुणः अव्यक्तमिति कार्यमायापरपर्यायप्रकृत्यधोभागपर्यायनामानि । अयं च गुणः सत्त्वरजस्तमोभेदन त्रिविधः । तत्र प्रकाशवृत्तिकं सत्त्वम् । प्रवृत्त्यादिवृत्तिकं रजः । नियमनादिवृत्तिकं तमः । उक्तं च—

क्रिया प्रकाशनिष्ठात्मा रजादिगुण ईरित. ॥
स्थैर्यं धैर्यं तथा दाक्ष्यं मार्दवं लघुतापि च ।

तथा—

सन्तोषमार्जवं शौचं व्यवसायः क्षमा स्मृतिः ॥

सौहित्यं परमौत्सुक्यं दान्तिः शान्तिर्दया परा।
सत्त्वस्य वृत्तयः प्रोक्ताः रजसश्चाथ कथ्यते ॥
शौर्यं क्रौर्यं महोत्साहः साभिमानः सकल्कता।
दार्ढ्यं च निर्दयत्वं च भोगो डम्भो रजोगुणाः ॥
अरतिर्मन्दता दैन्यं पैशुन्यं गुरुता तथा।
निद्राधिक्यं मदालस्यं निरोधो मूढता च या ॥
तमसो वृत्तयः प्रोक्ता विभिन्नाः सर्वजन्तुषु।
एवं संक्षेपतो विप्रा गुणतत्त्वमुदाहृतम् ॥ इति ॥

(पौ. पु. प. श्लो. २१-३७-४१)

यद्यपीन्द्रियतन्मात्रादीनां अहंकाराख्यैकतत्त्वोपादानकत्वेऽपि यथा नैकतत्त्वता तथा गुणानामप्येकतत्त्वता न युक्ता; तथापि सम्भूयैव कार्यकारित्वेन तत्त्वैक्यं युक्तम्। न च सर्वत्र कार्ये सर्वस्य गुणस्य जनकतया 'इदं सात्त्विकमिदं राजसमि'त्यादिव्यपदेशः कथमिति युक्तम्; तत्तद्वृत्तीनां प्रकाशादीनां प्राचुर्येण तस्योपपत्तेः। गुणसद्भावे मानं तु—सुखदुःखमोहादिकं किञ्चिज्जन्यम्; कार्यत्वात्, संमतवदिति। न च विषयविशेषज्ञानेनैव तदुपपत्तिः; एकस्यैव वनितादेर्विषयस्य पुरुषभेदेन सुखदुःखादिजनकत्वात्। तथा हि—चैत्रस्य पद्मावत्यां प्रीतिः, तामविन्दतो मैत्रस्य दुःखम्, तत्सपत्नीनां च मात्सर्यान्मोहः। पद्मावत्यां च सर्वे भावा व्याख्याताः। न च स्वीयत्वपरकीयत्वाभ्यां विशेषः; साधारणेऽपि सङ्गीतादौ पुरुषभेदेन सौमनस्यवैमनस्यादेर्दर्शनात्। न च तथापि गुणक्रियारब्धे विषये कथं पुरुषभेदेन सुखदुःखादिकमिति युक्तम्; यस्य गुणस्य यदा यं प्रत्युद्भवस्तदा तं प्रति तत्कार्यं सुखादिकमुत्पद्यत इति व्यवस्थोपपत्तेः।

अस्मादेव चित्ततत्त्वादुद्भूतसत्त्वं न्यग्भूतरजस्तमस्कं बुद्धितत्त्वमुपजायते। सा बुद्धिर्द्विविधा। अध्यवसायिनी अनध्यवसायिनी चेति।

तत्राध्यवसायिन्यां बुद्धौ संस्कारस्यावस्थानम्। एतत्सद्भावे मानं तु इष्टापूर्तादिजनितमपूर्वं किञ्चिदाश्रयकम्, संस्कारत्वात्, संमतवत्। न चात्मनां तदाश्रयत्वम्; विकारित्वप्रसङ्गात्। तथा निश्चयः किञ्चिदायत्तः, कार्यत्वात्, संमतवत्। तथा धर्मज्ञानादयो गुणाः किञ्चिन्निष्ठाः, गुणत्वात्, संमतवत्, तथा स्मृतिजनकसंस्काराश्रयत्वेनापि तत्सिद्धिः। उक्तं च—

गुणतत्त्वात्परा बुद्धिरभवन्मुनिपुङ्गवाः।
रजस्तमोभ्यां न्यग्भूता वृत्तिः सत्त्वेन चोत्कटा॥
सा बुद्धिरुदिता तन्त्रे विषयाध्यवसायिनी।
बोधोऽत्र द्विविधो [1]भावो व्यवसायात्मकस्तथा॥
अन्योनऽनध्यवसायात्मा व्यवसायात्मकस्तु यः।
सा बुद्धिरितरस्त्वात्मस्वभावो ग्राहकात्मनः॥
किं च प्रपातटाकादिक्रियाः क्लृप्ताः फलार्थिभिः।
समनन्तरमेवेह न यच्छन्ति फलानि तु॥
आमुष्मिकत्वात्किं तूर्ध्वं विनष्टा अपि ताः क्रियाः।
फलकालानुवर्तित्वात् संस्कारोऽपूर्वसञ्ज्ञितः॥
कल्प्यते न स पुंसि स्याद्विकारित्वेन हेतुना।
कृष्यादेरपि संस्कारो न पुंसि परिदृश्यते॥
कुर्वन्ति यत्र संस्कारं क्रिया साष्टगुणा मता।
एवं ज्ञानादिसंस्कारोऽप्यूह्यतां मुनिपुङ्गवाः। इति॥

(पौ. पुं. प. श्लो. ४२–४९)

ते चाष्टगुणाः धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्याणि। तत्र धर्मज्ञानवैराग्यैश्वर्याणि सात्त्विक्यो वृत्तयः। अवैराग्यं तु राजसम्।

---

1 प्रोक्तो विषयाध्यवसायकः। (अ).

अधर्माज्ञानानैश्वर्याणि तामसानि। अत्र धर्मो द्विविधः यमो, नियमश्चेति। तत्र यमः पञ्चविधः,

अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्कता। इति॥

नियमोऽपि पञ्चविधः,

अक्रोधो गुरुशुश्रूषा शौचं संतोष आर्जवम्। इति॥

तत्राहिंसा नाम परेषु द्रुह्यत्स्वपि तेषु दुःखानुत्पादनम्। शास्त्रीयहिंसाप्यहिंसा। सत्यं तु आपद्भीतिगतेनाप्यसत्यानुल्लेखः। गुरुदेवताब्राह्मणार्थेऽसत्योल्लेखश्च सत्यम्। अस्तेयं नाम अनीत्या परवित्तस्य स्वीकाराभावः। श्रुतदृष्टविशिष्टवस्तुनस्तूष्णीकारोऽपि। ब्रह्मचर्यं नाम प्रार्थयन्त्यामपि स्त्रियां मातृवद्बुद्धिः, विकाराभावोऽपि। अपकारेऽपि कालुष्याभावोऽकल्कता। एते च यमाः पञ्च। अक्रोधो नाम ताडनेऽपि कोपाभावः। गुरुशुश्रूषा नाम गुर्वादीनामाज्ञानुपालनम्, नित्यादिकर्मसु श्रद्धा च। शौचं नाम मृदम्भोभिः शरीरशोधनम्, भावशुद्धिश्च। संतोषो नाम लाभालाभयोः समत्वम्। आर्जवं नाम कौटिल्याभावः। एते पञ्च नियमाः। ज्ञानं तु दशविधम्। तन्मुक्तिप्रकरणे वक्ष्यते। वैराग्यमपि व्याध्यादिसकलविषयानुभवतृष्णाध्यात्मिकादिदुःखद्रव्यार्जनादिदुःखस्निग्धवियोगस्त्रीदोषदर्शनदेहदुष्पूरताप्रतिग्रहादिशास्त्रज्ञानहेतुकं प्राक्तनपुण्यपरिपाकमात्रहेतुकं चेति दशविधम्। ऐश्वर्यमप्यणिमादिभेदनाष्टविधम्। तल्लक्षणमप्युदाहरिष्यमाणवचनेषु स्फुटम्। अधर्मोऽपि हिंसाचौर्यमिथ्याकथनागम्यागमनापकारप्रत्यपकारमात्सर्यनित्यकर्मादिलोपाशौचासंतोषकौटिल्यभेदेन दशविधः। अज्ञानमपि तमोमोहमहामोहतामिस्रान्धतामिस्रभेदेन पञ्चविधम्। तत्र तमो नामानात्मन्यात्मभावः। तच्च चार्वाकादिदर्शनभेदेन दशविधम्। मोहो नाम अणिमाद्यष्टैश्वर्यसिद्धौ तत्परत्वप्रतिपत्तिः।

महामोहस्तु दिव्यादिव्यभेदेन दशधा भिन्नेषु शब्दादिषु परत्वाध्यवसायः। तामिस्रो नाम दिव्यादिव्यभेदेन दशविधानां शब्दादीनां अणिमाद्यष्टकस्य च नाशात्तापः। अन्धतामिस्रो नाम शब्दादिष्वणिमादिषु च परेण भुज्यमानेषु तदसहनम्। अवैराग्यमप्यतुष्टिवैचित्र्यात्छतविधम्। अनैश्वर्यमप्यष्टविधम्। इदश्चाशक्तिवशाद्भवति। अशक्तिश्च षट्सप्तत्याधिकशतसङ्ख्याका। एवं च धर्मो दशविधः। ज्ञानमशीतिः। शतसङ्ख्यो विरागः। चतुष्षष्टिविधमैश्वर्यम्। अधर्मो दशविधः। अज्ञानं चतुष्षष्टिः। अवैराग्यं शतम्। अनैश्वर्यं चतुरशीत्यधिकं शतम्। आहत्य बुद्धेर्वृत्तयो द्वादशाधिकषट्छतसङ्ख्याकाः। उक्तं च श्रीमत्पौष्करे—

धर्मो ज्ञानं च वैराग्यमैश्वर्यं बुद्धिवृत्तयः।
त्रयोऽत्र धर्ममुख्यास्तु सात्त्विकाः परिकीर्तिताः॥
रागस्तु राजसः शिष्टास्तामसाः परिकीर्तिताः।
एते धर्मादयश्चाष्टौ भावयन्ति यतस्ततः॥
लिङ्गाभावाः समुद्दिष्टाः पठ्यन्ते ते क्रमेण तु।
धर्मश्च द्विविधस्तत्र यमश्च नियमस्त्विति॥
चित्तस्य संयमस्तत्र स यमः परिपठ्यते।
अशास्त्रीयक्रियात्यागाच्छास्त्रीयेष्वपि कर्मसु॥
नियमः पठ्यते शास्त्रैर्योयमिन्द्रियसंयमः॥
यमः पञ्चविधोऽहिंसा सत्यमस्तेयमेव च॥
ब्रह्मचर्यमकल्कत्वं यम एवं तु पञ्चधा।
अक्रोधो गुरुशुश्रूषा शौचं संतोष एव च॥
आर्जवं चेति नियमः पञ्चधा परिकीर्तितः।
परेषु दुःखानुत्पादोऽहिंसा द्रोहशतैरपि॥

सा न हिंसेति विज्ञेया या हिंसा शास्त्रचोदिता ।
आपदो भीतितो वापि न तथ्यं सत्यमुच्यते ॥
असत्यमपि तत्सत्यं गुरुदेवप्रयोजनम् ।
अदत्तास्वीकृतिस्त्यागो वित्तस्यान्यायजस्य च ॥
श्रुतस्य परिदृष्टस्य तूष्णीकारोऽप्यचोरता ।
कर्मणा मनसा वाचा श्रवणाद्दर्शनादपि ॥
मातृवन्मन्यते नित्यं प्रार्थयन्त्यामपि स्त्रियाम् ।
तदेव ब्रह्मचर्यं स्याच्छेषा व्रतविडम्बकाः ।
स्वच्छता समता प्रीतिरपकारशतैरपि ॥
कालुष्यं [1]नोत्सहेद्वैरं सेयमुक्ताह्य कल्कता ।
एते पञ्च यमाः प्रोक्ता यतीनां सुशिवात्मनाम् ॥
नित्यं प्रध्वस्तकालुष्यो न कोपस्ताडनादपि ।
देवानां शिवभक्तानां पित्रोरपि गुरोरपि ॥
आज्ञानुपालनान्नित्यं काम्यनैमित्त्यकर्मणाम् ।
दानोपवासतीर्थानां श्रुताध्ययनयोरपि ॥
श्रद्धया करणं पुंसां शुश्रूषा परिकीर्तिता ।
गात्रप्रक्षाळनं शौचं मृदम्भोभ्यामुदाहृतम् ॥
संतोष उदितस्तन्त्रे लाभेऽलाभे समा मतिः ।
जानन्नपि च विप्रेन्द्रा जडवन्मूकवत्तथा ॥
निवृत्तः परपीडायाः श्रद्धधानश्च भावतः ।
आर्जवं तस्य तत्प्रोक्तं नियमस्त्विति पञ्चधा ॥
ज्ञानं [2] बुध्यात्मकं यत्तद्गुणाव्यक्तान्तगोचरम् ।
तस्मात्कैवल्यसंसिद्धिरिति तत्सिद्धिरुच्यते ॥
अशीतिसंख्यया सा च संक्षेपात्परिकीर्तिता ।

(पौ. पु. प. श्लो. ४९-६७)

---

[1] नोत्सहेद्वेदं-(अ). [2] पञ्चात्मकं-(अ).

अथ वैराग्यभेदोऽपि संक्षेपेणाधुनोच्यते ॥
व्याध्यादिपीडितस्यास्य स्वदेहेऽपि विरागता ।
संतुष्टः सर्वकार्येषु निस्पृहत्वाज्जुगुप्सति ॥
आध्यात्मिकादिदुःखेभ्यो वैराग्यं नियतं भवेत् ।
आर्जने रक्षणे चोरहरणे द्रविणस्य यत् ॥
दुःखं तन्मन्यमानस्य वैराग्यं सहसा भवेत् ।
स्निग्धाद्वियुज्यमानः सन्[1] रुदन् दुःखेन पीडितः ॥
दुःखस्य कारणं स्नेह इति मत्वा विरज्यति ।
कामुकस्तु स्त्रियां दृष्ट्वा किञ्चिद्वैराग्यकारणम् ॥
सद्यो वैराग्यमायाति श्रेयसः प्राप्तिकारणम् ।
सत्यन्ने म्रियते देहः पानीयादौ च नान्यथा ॥
एकाहस्याप्यपाने च ग्लानिं बध्नाति तत्क्षणात् ।
दुष्पूरोऽयमतो हेतोर्वैराग्यमुपजायते ॥
कचित्प्रतिग्रहादिभ्यो वैराग्यमुपगच्छति ।
अकस्माज्जायते कश्चिद्विरक्तः पुण्यवैभवात् ॥
इत्येवं तुष्टयः प्रोक्ता दशधा शिवशासने ।
अत्रैवान्तर्गताः सर्वास्तुष्टयोऽन्या द्विजोत्तमाः ॥
एताश्च भूताद्यव्यक्ततत्त्वानां प्रापकत्वतः ।
संभूय शतसंख्यास्तु तुष्टयः शिवशासने ॥
अथैश्वर्यविभेदोऽपि लक्ष्यते लेशतोऽधुना ।
बुद्ध्यात्मनोर्विभागेन स्थितमैश्वर्यमष्टधा ॥
धर्मिणो ज्ञाननिष्ठस्य विरागेच्छोश्च धीमतः ।
सत्त्वमुत्पादयेद्बौद्धमणोरैश्वर्यमिच्छया ॥
अणिमा परमाण्वादेरपि सूक्ष्मतरा स्थितिः ।

---

1 ऋते (मै).

लघिमा शीघ्रवेगित्वं पङ्कादावप्यमज्जनम् ।
महिमा व्याप्यवस्थानं बृहद्देहेन्द्रियादिभिः ।
तृतीयं कार्यतः सिद्धमैश्वर्यमणिमादिकम् ॥
प्राप्त्यादयो गुणाः पञ्च योगिनः करणात्मजाः ।
मनसाभीष्टसंसिद्धिः प्राप्तिर्नाम गुणालयः ॥
निर्माय स्त्रीसहस्राणि क्रीडाप्राकाम्यमाशु या ।
आज्ञाविधानं ब्रह्मादौ तत्पूजा चेशिता मता ॥
वशीकृतिर्वशित्वं स्याज्जगन्निर्माणमेव च ।
भुञ्जानस्यास्य कर्माद्यैरबाधे गरिमा मतः ॥ इति ॥

(पौ. पुं. प. श्लो. ८७-१०३)

एतच्चैश्वर्यं पार्थिवं पिशाचानामष्टगुणम्। राक्षसानां पार्थिवाप्यं षोडशगुणम्। यक्षाणां पार्थिवाप्यतैजसं चतुर्विंशतिगुणम्। गन्धर्वाणां पार्थिवाप्यतैजसवायव्यं द्वात्रिंशद्गुणम्। इन्द्रस्य पार्थिवाप्यतैजसवायव्याकाशीयं चत्वारिंशद्गुणम्। सोमस्य पार्थिवाप्यतैजसवायव्याकाशीयमानसमष्टाचत्वारिंशद्गुणम्। प्रजापतेस्तु पार्थिवाप्यतैजसवायव्याकाशीयमानसाहंकारिकं षट्पञ्चाशद्गुणम्। ब्रह्मणस्तु पार्थिवाप्यतैजसवायव्याकाशीयमानसाहंकारिकबौद्धं चतुष्षष्टिगुणम्। उक्तं च शिवधर्मोत्तरे—

तत्राष्टगुणमैश्वर्यं पार्थिवं पिशिताशिनाम् ।
तत्सायुज्यगतानां च नराणां तत्समं स्मृतम् ॥
रक्षसां षोडशगुणं पार्थिवाप्यं च तद्द्विधा ।
एतन्निरवशेषेण यक्षेष्वन्यच्च तैजसम् ॥
गन्धर्वाणां च वायव्यं याक्षं च सकलं स्मृतम् ।
पाञ्चभौतिकमिन्द्रस्य चत्वारिंशद्गुणं महत् ॥

सोमस्य मानसं दिव्यं यच्चाधः पाञ्चभौतिकम् ।
सौम्यात्प्रजापतिस्थानमहंकारगुणान्वितम् ॥
चतुष्षष्टिगुणं ब्राह्मं बौद्धमैश्वर्यमुत्तमम् ॥ इति ॥

तथा श्रीमत्पौष्करे—

पिशाचानां यथोद्दिष्टमणिमादिगुणाष्टकम् ।
रक्षसां द्विगुणं ज्ञेयं यक्षाणां त्रिगुणं भवेत् ॥
चतुर्गुणं तु गान्धर्वमैन्द्रं पञ्चगुणं भवेत् ।
सोमानां षड्गुणं सप्तगुणं स्यात्तु प्रजापतेः ॥
चतुष्षाष्टिगुणं बौद्धमैश्वर्यं ब्रह्मणः स्मृतम् ।
ततः समासादैश्वर्यं चतुष्षाष्टिगुणं मतम् ॥
ततस्त्वैश्वर्य[1]भोगेन विषयेष्वपि संस्थिताः ।
चरन्ति क्षीणकर्माणः शुचीनां श्रीमतां गृहे ॥
ततो धर्मेण युज्यन्ते भोगनिद्रामदाकुलाः ।
हिंसायामपि चौर्ये वा मिथ्याकथन एव वा ॥
गुर्वङ्गनाधिगमनेऽप्यपकारप्रतीकृतौ ।
क्रोधे नित्यादिलोपे वाशौचेवाऽतोष एव वा ॥
अनार्जवे च सततं प्रवर्तन्तेऽन्धदृष्टयः ।
अधर्मवृत्तयस्त्वेता दशसङ्ख्यास्तु पूर्ववत् ॥
अथाधर्मे प्रवृत्तं तमणुमज्ञानसन्ततौ ।
नियुनक्ति महेशानो यथा मूढो न पश्यति ॥
तमो मोहो महामोहस्तामिस्रश्चान्धपूर्वकम् ।
तामिस्रमिति पञ्चैव मता अज्ञानवृत्तयः ॥
अनात्मन्यात्मभावो यः स तमः परिकीर्तितम् ।

1 मोहेन (दे).

भूताद्यव्यक्तपर्यन्तं तत्त्वदर्शनभेदतः ॥
दशधा तम उद्दिष्टं मोहस्त्वष्टविधो मतः ।
अणिमादिषु लब्धेषु परत्वप्रतिपत्तितः ॥
दिव्यादिव्यविभेदेन शब्दादिषु दशस्वपि ।
परताध्यवसायो यो महामोहः प्रकीर्तितः ॥
शब्दादीनां दशानां च दिव्यादिव्यविभेदतः ।
अणिमाद्यष्टकस्यापि वैकल्यात्साधनेऽथ वा ॥
प्राप्तानां नाशतस्तापो यस्तामिस्र प्रकीर्तितम् ।
शब्दादावणिमादौ च भुज्यमाने परेण तु ॥
तत्सुखाहरणे यत्तत्तामिस्रं चान्धपूर्वकम् ॥
ततश्चाज्ञानभेदोऽयं चतुष्षष्टिविधो मतः ॥
अवैराग्यं च शतधा तुष्टीनां व्यत्ययात्मतः ।
न जुगुप्सादयः सर्वपदार्थेषु तदा नृणाम् ॥
अष्टभेदमनैश्वर्यमैश्वर्यव्यत्ययात्मकम् ।
तच्चाशक्त्या भवेत्सा च षट्सप्तत्यधिकं शतम् ॥
अज्ञानातुष्टिरूपत्वाच्चतुष्षष्ट्युत्तरं शतम् ।
बुध्यशक्तिश्च तुष्टिः स्यात्कारणस्यार्कसंख्यया ॥
अशक्तिरेव सक्षेपात् षट्सप्तत्यधिकं शतम् ।
इति धर्मादयो भावा[1] बुद्धिस्था वासनात्मना ॥
क्रमेण प्रत्ययात्मानः प्रोक्तास्तद्वृत्तिभदतः ।
प्रत्याययन्ति क्षेत्रज्ञं तेन ते प्रत्ययाः स्मृताः ॥
धर्मो दशविधो ज्ञानमशीतिशतसंख्यया ।
विरागोऽष्टाष्टधैश्वर्यमधर्मो दशधा मतः ॥

---

[1] स्संस्थिता (मै).

अज्ञानं च चतुष्षष्टिरवैराग्यं शतं भवेत् ।
अष्टसंख्यमनैश्वर्यं षट्त्रिंशच्च चतुश्शतम् ॥
षट्सप्तत्यधिकाशक्तिः संख्यया शतधा मता ।
संम्भूय वृत्तयो बुद्धेः षट्शतं द्वादशाधिकम् ॥
एवं संक्षेपतः प्रोक्ता बुद्धिर्भावाष्टकात्मिका ।
अष्टारेऽस्मिन्महाचक्रे पर्यटन्ति पुनः पुनः ॥
पुद्गलास्तेन तेषां तु नान्तं पश्यन्ति पुद्गलाः । इति ॥

(पौ. पुं. प. श्लो. १०४-१२८)

**ननु धर्मादयो भावाः परस्परविरुद्धाः कथमेकस्मात्कारणाज्जाताः ? उच्यते—धर्मादयः परस्परविरुद्धा न भवन्ति, प्रत्ययात्मकत्वात् । अत एव ज्ञानाभावो नाज्ञानम्; किन्त्वन्यथाज्ञानमेव । ततश्चाधर्मादीनामपि ज्ञानत्वेन सामान्यविशेषभावाद्विरोधाभावः । उक्तं च पौष्करे—**

अष्टौ धर्मादयो भावा विरुद्धास्तु परस्परम् ।
गुणाः सत्त्वादयश्चैवमेककारणकाः कथम् ॥

**ईश्वरः—**

न विरुद्धास्तु धर्माद्या यतस्ते प्रत्ययात्मकाः ।
ज्ञानाभावोऽत्र नाज्ञानमन्यथाज्ञानमेव तत् ॥
तस्माज्ज्ञानविशेषास्ते सर्वे धर्मादयः स्थिताः ।
न विशेषास्तु सामान्याद्विरुद्धा हि कदाचन ॥ इति ॥

(पौ. मा. प. श्लो. ४४-४६)

**अस्मादेव बुद्धितत्त्वादिन्द्रियाद्यारम्भकं तत्त्वमहंकारः स्वोपधानेन आत्मन्यहंबुद्धिहेतुश्चोत्पद्यते । एतद्व्यापारात्प्राणादीनां संचारः । एतत्सद्भावे मानं तु अहमाकाराध्यवसायः किंचित्कारणकः, कार्यत्वात्, संमतवादित्यनुमानमेव । न च बुद्ध्यैव तदुपपत्तिः; बुद्धेः**

कार्यस्याध्यवसायस्य प्रत्यर्थं भिन्नरूपत्वं विषयग्राहकरूपत्वं च, अहमाकाराध्यवसायस्य त्वेकरूपत्वं विषयिग्राहकरूपत्वं चेति, बुद्धिकार्याद्ध्यवसायादस्य विलक्षणत्वात्। बुद्धेरहमध्यासहेतुत्वे विषयग्रहे सर्वत्राहमुपरागप्रसङ्गाच्च। न च विषयग्रहे आत्मभानसामग्रयनुप्रवेशाननुप्रवेशाभ्यां तदुपरागानुपरागयोरुपपत्तिः; आत्मनः संयोगस्य सर्वत्रानुप्रवेशेनाननुप्रवेशाभावात्। अस्मन्मते तु अहंकारव्यापाराव्यापाराभ्यामुपरागानुपरागावुपपन्नाविति न काप्यनुपपत्तिः। तदेवमहमाकाराध्यवसायहेतुत्वेनाहंकारसिद्धिः ॥

तदुक्तं श्रीमत्पौष्करे—

अत ऊर्ध्वमहंकारतत्त्वं संक्षिप्य वर्ण्यते।
प्रत्यात्मनियतं तच्च प्रसिद्धमहमात्मकम् ॥
मनः पूर्वमधस्तत्त्वं यत एवोपजायते।

ऋषयः—

प्रत्ययोऽधोऽहमात्मात्र व्यवसायात्मको यतः ॥
बुद्धिरेव ततो भूयात्किमनेन वदेश्वर।

ईश्वरः—

विषयाध्यवसायो यः प्रत्यर्थं भेदतः स्थितः।
अयमित्यात्मकः सर्वो बुद्धिशब्देन गण्यते ॥
अहमात्मैकरूपस्तु सर्वतः संव्यवस्थितः।
ग्राहकव्यवसायात्मा बुद्धिरेषा कथं भवेत् ॥
विषयाभिमुखी बुद्धिरहं विषयसङ्ग्रहः।
ऐक्यं कथं तयोर्विप्राः कथ्यतेऽत्यन्तभिन्नयोः ॥

ऋषयः—

अहंकृदेकमेष्टव्यं सर्वेषां [1] विषयात्मनः।
प्रत्ययस्योदयात्तत्किं प्रत्यात्मनियतं भवेत् ॥

---

1 अहमात्मन. (दे).

ईश्वरः—

इदमित्येव सर्वत्र धीस्तावदुपजायते ।
नैतावता तदेकत्वं वाच्य प्रत्यक्षबाधतः ॥
किं च सर्वेषु कुम्भेषु कुम्भ इत्येव जायते ।
सर्वेषां प्रत्ययो वापि कुम्भैक्यं न प्रदृश्यते ॥
प्रत्यात्मनियतोऽहंकृदृच्छामीति च वर्तते ।
एकस्यान्यस्य पश्यामित्येवं बुद्ध्युदयस्तथा ॥
अन्यथैकप्रकाराहंमतिः स्यादुभयोरपि ।
अहंकारः पृथक्सार्वजनीन इति बुद्ध्यताम् ॥
यद्यभिन्नमहंकृत्स्याद्देवदत्तेऽप्यहंमतिः ।
अन्यस्य चोपजायेत नात्मैकत्वं ततः स्थितम् । इति ॥

(पौ. पु. प. श्लो. १२९–१४० )

**अयं चाहंकारः प्रथमं तावज्जीवनसंरम्भगर्वभेदेन त्रिविधः। तत्र जीवनो नाम पञ्चप्राणवायुधारकः । संरम्भो नाम प्रयत्नः। गर्वो नामाहमिति ग्राहकाध्यवसायः। उक्तं च तत्त्वप्रकाशे--"स्यात्त्रिविधोऽहंकारो जीवनसंरम्भगर्वभेदेन" इति। मृगेन्द्रे—**

संरम्भाद्यस्य चेष्टन्ते शारीराः पञ्च वायव । इति

**अन्यत्र च--**

संरम्भोऽहंकृतो वृत्तिः . . . . । इति च ॥

**अयं पुनः सात्त्विकादिभेदेनापि त्रिविधः। तत्र तैजसः सात्त्विकसंज्ञः, राजसो वैकारिकाभिधः, तामसो भूतादिनामा । तत्र तैजसाहंकारान्मनः चक्षुरादीनि पञ्च ज्ञानेन्द्रियाणि चोत्पद्यन्ते । वैकृतादहंकाराद्वागादीनि पञ्च कर्मेन्द्रियाण्युत्पद्यन्ते। भूतादेरहंकाराच्छब्दादीनि पञ्च तन्मात्राण्युत्पद्यन्ते। तत्र सङ्कल्पविकल्पकारणं तत्त्वं मनः। चक्षुरादिनाऽऽलोचिते 'अयं ब्राह्मणः' इत्यादिनिश्चयः सङ्कल्पः। सम्यग्विशेषणविशेष्यभावेन अर्थकल्पनारूपत्वात् । तादृशेऽर्थे 'अयं**

ब्राह्मणो वा क्षत्रियो वे'त्यादिसंशयो विकल्पः । विविधकल्पनारूपत्वात्। तत्सद्भावे मानं तु सङ्कल्पविकल्पप्रत्ययः सकारणकः, कार्यत्वादिति । अयं च नाहंकारिको नापि बौद्धः; बुद्ध्यहंकारयोर्निश्चयाहंप्रत्यययोर्हेतुत्वेन क्लृप्तत्वात् । न चायमैन्द्रियिकः; चक्षुरादिदृष्टस्यार्थस्य मनसैव बुद्ध्युपारोहणात्। अन्यथा घटे दृष्टे पटस्यापि निश्चयः स्यात् । न च बुभुत्सैव तन्नियामिकेति वाच्यम्। बुभुत्साया इच्छारूपत्वेन मनोजन्यत्वात् । तस्मात्सङ्कल्पविकल्पकारणत्वेन मनः सिद्धम् ॥

इदं च मनो महत्। ननु क्रमेणार्थप्रकाशनादण्वेव। महत्त्वे सर्वदा सर्वपदार्थप्रकाशनप्रसङ्ग इति चेन्नैवम्। मनसो महत्त्वेऽपि कर्मवशात्सामग्र्यपेक्षणात्तमसाभिभवादपि ज्ञानस्य क्रमिकत्वोपपत्तेः । किं च मनसोऽणुत्वे अणोरेव पदार्थस्यावभासनं स्यात्। यस्य कारणस्य यावति व्याप्तिस्तावत्येवार्थभासनस्य प्रदीपसूर्यादौ दृष्टत्वात् । न च महताल्पस्य ग्रहणमयुक्तमिति वाच्यम्। विरोधाभावात् । तस्मान्मनो महदिति [1]स्थितम्। तच्च प्रत्यात्मनियतम् । उक्तं च श्रीमत्पौष्करे—

स च त्रिविध उद्दिष्टः प्रथमस्तत्र तैजसः ।
वैकारिको द्वितीयः स्यात्तथा भूतादिकः परः ॥
सत्त्वेनोत्कृष्टभागो यः स तैजस इहोच्यते ।
वैकृतो रजसोत्कृष्टो भूतादिस्तमसाधिकः ॥
तैजसादप्यहङ्कारान्मनो बुद्धीन्द्रियाणि च ।
पञ्च कर्मेन्द्रियाणि स्युरहङ्कारात्तु वैकृतात् ॥
अहङ्कारात्तु भूतादेर्जाता तन्मात्रसंहतिः ।
यः सङ्कल्पविकल्पात्मा प्रत्ययोऽन्तर्गतो नृणाम् ॥

[1] सिद्धम् (मै).

स नाहङ्कारिको नापि बौद्धो व्यापारभेदतः ।
स तु मानस एवेष्टस्तन्त्रेऽस्मिन्मुक्तिसागरे ॥
चक्षुषाऽऽलोकिते ह्यर्थे तमर्थं बुद्धिगोचरम् ।
विदधातीह यद्विप्रास्तन्मनः परिपठ्यते ॥
अन्यथालोचिते कुम्भे पटेऽपि स्याद्विनिश्चयः ।
किं च साम्नादिमत्पिण्डे गोशब्दमनुभूय यत् ॥
भूयस्तत्सदृशे दृष्टे गोशब्दोच्चारहेतुकम् ।
तन्मनः कथ्यते तन्त्रे विकल्पप्रत्ययात्मकम् ॥
केचिन्मनोऽणुमिच्छन्ति क्रमेणार्थविराजनात् ।
महच्चेत्सर्वदा सर्वपदार्थावगतिर्भवेत् ॥
तदसत् कर्मवशतः क्रमाज्ज्ञानोदयो नृणाम् ।
सामग्र्यपेक्षातश्चापि तमसाभिभवादपि ॥
मनोऽणु चेदणुद्रव्यग्राहकं सर्वदा भवेत् ।
यावति ग्राहकव्याप्तिस्तावद्ग्राह्यं च गृह्यते ॥
दीपेन ग्रहणं यद्वत्तथा आदित्यरश्मिभिः ।
अल्पार्थग्राहकत्वेन मनोऽल्पमिति चेन्मतिः ॥
तदसन्महतोऽप्यल्पग्रहणं परिदृश्यते ।
महदेव महत्तत्त्वं प्रत्यात्मनियतं च तत् ॥ इति ॥

(पौ. पुं. प. श्लो. १४०-१५३)

एतानि च चित्तबुद्ध्यहंकारमनांसि बाह्यार्थालोचने असामर्थ्यादन्तःकरणानि । तथा च न श्रोत्रादिवद्वर्तमानमात्रग्राहकाणि । अपि तु भूतभविष्यतोरपि ग्राहकाणि । सात्त्विकराजसाहंकारान्यतरप्रभवं तत्त्वमिन्द्रियम् । तच्च द्विविधम् । बुद्धीन्द्रियं कर्मेन्द्रियं चेति । तत्र सात्त्विकाहंकारप्रभवं ज्ञानेन्द्रियम् । प्रकाशकत्वात् । राजसाहंकारप्रभवं कर्मेन्द्रियम् । क्रियाजनकत्वात् । तत्र ज्ञानेन्द्रियं श्रोत्रादिभेदेन

पञ्चविधम् । तत्र शब्दग्राहकमिन्द्रियं श्रोत्रम् । स्पर्शग्राहकं त्वक् । रूपग्राहकं चक्षुः । गन्धग्राहकं घ्राणम् । रसग्राहकं रसनम् । उक्तं च श्रीमत्पौष्करे—

बुद्धीन्द्रियाणि कथ्यन्ते श्रोत्रं त्वक्चक्षुरेव च ।
जिह्वा घ्राणं च पञ्चेति सुप्रसिद्धानि तानि च ॥
प्रत्यक्षविषयत्वेन तेषां सिद्धेर्न युक्तयः ।
कथ्यन्ते तान्यहङ्कारादुपजातानि सात्त्विकात् ॥ इति ॥

(पौ. पु. प. श्लो. १५८, १५९)

ननु श्रोत्राद्यधिष्ठानत्वाभिमतानि कर्णशष्कुल्यादीन्येव शब्दादिग्राहकाणि सन्तु । कृतं श्रोत्रादिभिरिन्द्रियैः । न च प्राप्यकारित्वानुरोधेनाधिष्ठानातिरिक्तमिन्द्रियं स्वीकर्तव्यमिति युक्तम् । त्वगाद्यधिष्ठानस्यैव प्राप्यकारित्वोपपत्तेः । चक्षुःश्रोत्रयोः प्राप्यकारित्वासिद्धेश्च । न चैवं कुड्यादिव्यवहितस्याप्युपलम्भप्रसङ्गः । कुड्याद्यभावस्यापि तत्र हेतुत्वेन कुड्यादिसत्वे तदनुपलम्भोपपत्तेः । स्फटिकाद्यन्तरितस्यापि दर्शनाच्च । प्राप्यकारित्वे शाखाचन्द्रयोर्युगपदुपलम्भायोगाच्च । तस्मादधिष्ठानातिरिक्तमिन्द्रियं नोपेतव्यमिति मैवम् । चक्षुषः प्राप्यकारित्वाभावे कुडयादिव्यवहितस्याप्युपलम्भप्रसङ्गात् । न च कुडयं प्रतिबन्धकम् । तस्य साक्षात्प्रतिबन्धकत्वे कुडयाद्बहिः स्थितस्येव कुडयपुरुषयोर्मध्यगतस्यापि अनुपलम्भप्रसङ्गेन सन्निकर्षविघटनद्वारैव प्रतिबन्धकत्वस्याङ्गीकार्यत्वात् । न च ग्राह्यग्राहकमध्यगतत्वेन तत्प्रतिबन्धकम्; मध्यावस्थानस्यापि सन्निकर्षविघटनायैवापेक्षितत्वात् । अन्यथा अभिमुखस्थितस्येव पश्चाद्भागस्थितस्यापि ग्रहणप्रसङ्गाच्च । ग्रहीतृग्राह्ययोर्मध्ये अन्यस्याभावात् । स्फटिकान्तरितानुपलम्भप्रसङ्गस्तु तवापि समानः । त्वन्मतेऽपि मध्यवर्तिपदार्थस्य प्रतिबन्धकस्य सद्भावात् । अस्वच्छस्य तस्य प्रतिबन्धकत्वे मन्म-

तेऽपि सन्निकर्षे तस्यैव प्रतिबन्धकत्वं सुवचम् । तस्मात्सन्निकृष्टमेव चक्षुर्ग्राहकम् । न च नयनगोळकस्य घटादिभिः सन्निकर्षः सम्भवतीति तदधिष्ठानकं सङ्कोचविकासधर्मकमन्यदेव चक्षुरङ्गीकार्यम्। न च चक्षूरश्मीनां घटादिसन्निकर्षे अन्तरा पुरुषादिव्यवधानेऽपि तद्ग्रहः स्यात्। सन्निकर्षविघटनेहेतोराश्रयविनाशस्यान्यतरकर्मणो वा अभावादिति वाच्यम्। गवाक्षपिधाने तदन्तर्गतानां सूर्यरश्मीनां विनाशवदपसरणवद्वा इहापि विनाशापसरणान्यतरसम्भवेन संयोगविघटनस्यैवोपपत्तेः ॥

ननु श्रोत्रस्य कथं विषयसम्बन्धः? न च चक्षुर्वृत्तेरिव श्रोत्रवृत्तेर्बहिर्निर्गमेन सम्बन्धोपपत्तिः। दूरदेशस्थस्य तारस्येव मन्द्रस्यापि ग्रहणप्रसङ्गादिति चेन्न। वीचीतरङ्गन्यायेन सन्तत्या कर्णदेशोत्पन्नस्य शब्दस्य ग्रहणोपपत्तेः । न च कर्णदेशोत्पन्नस्येव दूरदेशोत्पन्नस्य श्रोत्रसंयुक्त आकाशे समवायेन ग्रहः स्यादिति वाच्यम्। कर्णावच्छिन्नाकाशसमवायस्यैव ग्राहकत्वात् । नन्वेवं वीचीतरङ्गन्यायेनोत्पत्त्यभ्युपगमे कर्णस्यैव संनिकर्षसम्भवादतिरिक्तेन्द्रिये मानं नास्तीति चेत्, बधिरस्य सत्यपि कर्णे शब्दानुपलब्ध्या तदधिष्ठानकस्यान्यस्याभ्युपेयत्वात् । तस्मात्कर्णशष्कुल्यवच्छिन्ननभोदेशाधिष्ठानकं श्रोत्रेन्द्रियं सिद्धम्। तच्च वीचीतरङ्गन्यायेन सन्तत्या कर्णदेशोत्पन्नशब्दग्राहकमिति । यत्तु एवं सति अतिदूरोत्पन्नोऽपि शब्दः सन्तत्या श्रोत्राकाशदेशेऽपि शब्दमुत्पादयेदिति तदसत्; तथात्वे मन्द्रतारशब्दभेदेन समीपदूरग्रहव्यवस्थापि न स्यात्। तस्मान्निमित्ततारतम्यादेकस्यैव बाणस्य यथा दूरसमीपपातित्वं तथा एकः शब्द एव निमित्ततारतम्याद्दूरसमीपस्थपुरुषकर्णप्रदेशं प्राप्नोति । एवं कुष्ठादिना त्वगाद्युपघाते स्पर्शाद्यप्रतीत्या तदधिष्ठानमिन्द्रियमङ्गीकार्यम्। कुष्ठादेः स्वतो दोषत्वे मानाभावात्।

नन्वेकमेवेन्द्रियमधिष्ठानभेदेन भिन्नविषयग्राहकमस्तु; कृत-मिन्द्रियभेदेन; अन्धबधिरत्वादिव्यवस्थापि तत्तच्छक्तिविनाशेन भवि-ष्यतीति चेन्न। धर्मिग्राहकेणोक्तेन प्रमाणेन भिन्नतयैवेन्द्रियाणां सिद्धेः। अभेदे प्रमाणासिद्धे कथञ्चिच्छक्तिभेदेन व्यवस्थोपपादनीया। न च तत्र प्रमाणमस्ति। तदेवमिन्द्रियाणि भिन्नानि। तदुक्तं श्रीमत्पौष्करे—

ननु गोळकमेवेष्ट चक्षुः कैश्चित्सहेतुकम्।
सान्तरग्रहणाच्छाखाचन्द्रयोर्युगपत्स्थितेः॥
स्थूलार्थग्रहणाच्चैव तथा किमिति नेष्यते।

ईश्वरः—

गोळकादीन्द्रियत्वेन सान्तरग्रहणं मतम्॥
व्याप्तमेव हि गृह्णीत ग्राहको दीपवन्मतः॥
गोळकस्य तदव्याप्त्या चाक्षुष्यं दूरवारितम्।
पृथ्वर्थग्रहणं यत्तद्व्यापकत्वेन युज्यते॥
नो चेद्गोळकमात्रस्य भावस्य ग्रहणं भवेत्।
एककाले तु शाखेन्द्वोर्ग्रहणं व्यापकत्वतः॥
वस्तुस्थित्या तु शाखेन्द्वोर्ग्रहणं नैककालजम्।
आशुत्वेनाभिमानं तत्सहस्रदळभेदवत्॥

ऋषयः—

ननु गोळकमेवेष्टमाधारत्वेन चक्षुषः।
यत्रैवाधारसद्भावस्तत्राधेयो व्यवस्थितः॥
व्यापकत्वेन या सत्ता सा त्वकिञ्चित्करी मता।
व्यापकोऽपि यथा जीवो व्योमदेशे न बोधकः॥
कथं पुनर्दविष्ठार्थं प्राप्य गृह्णाति लोचनम्।

*ईश्वरः—

तदसत्तैजसत्वेन गोळकस्य बहिष्कृतेः ।
दीपवत्तत्कृतास्थानं चक्षुर्गृह्णाति [1] नोद्धृतम् ॥
दीपेनोपकृतं चक्षुस्तमसा वार्थसञ्चयम् ।
ततो गन्धादिनोक्तेन प्रसङ्गो दूरवारितः ॥
चक्षुराधारभूतस्य गोळकस्य प्रवृत्तितः ।
ननु नायनतेजोभिर्निस्सृतैर्[2]मिलितैरपि ॥
अर्थो गृह्येत तन्नाशुविनाशान्मीलनोत्तरम् ।
घटान्तस्थस्य दीपस्य प्रभा इव पिधानतः ॥
दृशो गोळकमात्रत्वे ह्यप्राप्तग्रहणं भवेत् ।
यद्यप्राप्तं च गृह्णीयात्तत्तु स्याद्व्यवधानतः ॥
तस्माद्व्यापकमेष्टव्यं चक्षुर्दूरार्थदर्शने ।
एवं सति त्वगादेश्च गत्वार्थग्रहणं भवेत् ॥
इति चेत्तन्न वाय्वादिभूताधिष्ठानगोचरम् ।
गत्वार्थग्रहणं नैषां किं तु प्राप्तार्थमापकाः ॥

ऋषयः—

नेत्रवच्छ्रवणं गत्वा न गृह्णाति यदि ध्वनिम् ।
दिग्देशोपहितः शब्दः कथमत्रोपगृह्यते ॥

ईश्वरः—

तदसद्वेगतः शब्दः सन्तत्या श्रोत्रमागतः ।
बाणादिपातवत्सद्यो दिग्देशाननुमापयेत् ॥
तदा प्रागनुभूत्यैव भेर्याद्यनुमितिश्च या ।

---

* अत्र मुद्रितपौष्करागमे इश्वर इत्यतः परं
तदसच्च जडत्वेन गोळकस्य बहिः स्थितम् । इति पाठः समुपलभ्यते ।

1 नाद्धृतम्–(अ). 2 मिलितेऽपि च (अ),

गृह्णाति प्राप्तमेवार्थमिन्द्रियाणीत्यतः स्थितिः ॥
नैकमिन्द्रियमेष्टव्य चक्षूरूपाद्यवेदनात् ॥ इति ॥

(पौ. पुं प. श्लो. १७३–१९१)

नन्वेतानि कथमाहङ्कारिकाणि? प्रतिनियतगुणग्राहकत्वेन भौतिकत्वस्यैवोचितत्वात्। तथा हि—श्रोत्रादीनि शब्दाद्याश्रय प्रकृतिकानि, तदभिव्यञ्जकत्वात्, यद्यस्याभिव्यञ्जकं तत्तदाश्रय-प्रकृतिकम्, यथा कुङ्कुमगन्धाभिव्यञ्जकं घृतमिति, मैवम्; नीलाभि-व्यञ्जकेन तदाश्रयपृथिवीप्रकृतिकत्वरहितेन चक्षुषानैकान्तिकत्वात्। नन्वेषां प्रकृतिभेदाभावे कथं विषयप्रतिनियम इति चेत्, न प्रकृतिभेद-प्रयुक्तो विषयानियमः। किं तर्हि? नियतिविशेषप्रयुक्तः। किं च विषयप्रातिनियमः कीदृग्रूपः? किं यत्प्रकृतिकं यदिन्द्रियं तत्तस्यैव गुणं गृह्णाति नान्यस्येति? किं वा यदिन्द्रियं यत्प्रकृतिकं तत्तद्गुणमेव गृह्णाति न तु तद्गुणान्यदिति। नाद्यः; चक्षुषा पृथिवीगुणस्य नीलादेरग्रहप्रसङ्गात्। न द्वितीयः; कर्मसामान्यादेरग्रहप्रसङ्गात्। नन्विन्द्रियाणि तत्तदाश्रयप्रकृतिकानि, शब्दादिषु पञ्चसु मध्ये तत्तन्मात्राभिव्यञ्जकत्वादिति चेत्, न। शब्दमात्रव्यञ्जकत्वादित्यत्र दृष्टान्ताभावात्। एवं रसमात्रव्यञ्जकत्वादित्यत्रापि जलस्य नवशरा-वादिगन्धव्यञ्जकत्वाद्दृष्टान्ते साधनवैकल्यम्। सर्वत्र वाऽप्रयोजकत्व-माहङ्कारिकत्वबोधकागमबाधितत्वं च। तस्मान्न भौतिकानीन्द्रि-याणि, किं त्वाहङ्कारिकाणीति सिद्धम्॥ तदुक्तं श्रीमत्पौष्करे—

ऋषयः—

यदभिव्यञ्जकं यस्य सजातीयं हि तस्य तत्।
यथाभिभूतगन्धस्य निम्बत्वक्चन्दनस्य च॥
शब्दाभिव्यञ्जकं श्रोत्रमाकाशात्मकमेव तत्।
त्वगादेश्चैवमुन्नेयमाहंकारिकता कथम्॥

ईश्वरः—

भौतिकत्वेन मूर्तत्वमिन्द्रियाणां घटादिवत् ।
ग्राह्यत्वं चेन्द्रियैरन्यैरवस्थानं न कुत्रचित् ॥
किं च मूर्तोपरोधेन मूर्तानां ग्रहणं न हि ।
स्फटिकान्तर्गतं वस्तु न गृह्णीयात्तु लोचनम् ॥
पानीयान्तर्गतं वापि तस्माच्चक्षुर्न तैजसम् ।

ऋषयः—

यद्येवं सति कुड्यान्तर्निहितस्यापि वस्तुनः ॥
ग्रहणं स्यादमूर्तत्वेनाहंकारोद्भवत्वतः ।

ईश्वरः—

तदसत्तामसत्वेन कुड्यादेर्गतिरोधतः ॥
व्यङ्ग्यव्यञ्जकयोर्यत्तु सजातीयत्वमीरितम् ।
तदप्यचारु यत्कर्मजात्योर्दृग्विषयत्वतः ॥
रूपैकविषयं नातस्तैजसत्वं च हीयते ।
तथात्वे तद्द्विष्ठार्थग्रहणं नोपपद्यते ॥
नाप्राप्तग्रहणं दृष्टं यत्किंचिद्व्यवधानतः ।
प्राप्तमेवेन्द्रियं सर्वं गृह्णाति त्वग्यथेन्द्रियम् ॥
किं च मूकाद्यनुत्पत्तिर्देहाङ्गत्वे प्रसज्यते ।
घ्राणाद्यवयवोपेतो मूकादिः परिदृश्यते ॥
ततो व्यापकमेवेष्टं चक्षुर्दूरार्थदर्शने ।
श्रोत्रादीनि क्रमोक्तानि तद्ग्राह्याः पञ्च च क्रमात् ॥
भूतपञ्चकसम्बन्धशब्दानां ग्राहिका श्रुतिः ।
ततोऽवशिष्टभूतेषु स्पर्शस्त्वग्ग्राह्य इष्यते ॥
एवमन्येष्वपि ज्ञेयं तद्ग्राह्याः पञ्च च क्रमात् ।
श्रोत्रत्वग्लोचनादीनां क्रमेणोत्पत्तिरीरिता ॥ इति ॥

(पौ. पुं. प. श्लो. १६०–१७२)

कर्मेन्द्रियाणि तु वाक्पादपाणिपायूपस्थानि। तेषां व्यापारास्तु वचनादानविहरणोत्सर्गानन्दाः। ते च सत्यपीन्द्रियाधिष्ठानत्वाभिमते क्वचिन्नोत्पद्यन्ते। तस्मादधिष्ठानातिरिक्तेन्द्रियासिद्धिः। तदुक्तं पौष्करे—

कर्मेंद्रियाणि वाक्पादपाणिगुह्यगुदानि च।
वचनादानगमनानन्दोत्सर्जनहेतवः॥ इति॥

तामसाहङ्कारप्रभवं तत्त्वं तन्मात्रम्। तच्च पञ्चविधम्। शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रं चेति। तत्र ध्वनित्ववर्णत्वतारत्वमन्द्रत्वादिविशेषहीनं शब्दसामान्यं शब्दतन्मात्रम्। शीतोष्णत्वादिविभागरहितं स्पर्शसामान्यं स्पर्शतन्मात्रम्। शुक्लत्वादिविशेषशून्यं रूपसामान्यं रूपतन्मात्रम्। मधुरत्वादिविभागविधुरं रससामान्यं रसतन्मात्रम्। सुरभित्वादिविशेषानाक्रान्तं गन्धसामान्यं गन्धतन्मात्रम्॥

ननु तन्मात्रसद्भावे किं मानम्? न तावत् 'आकाशादीनि भूतानि उपादानारब्धानि, कार्यत्वात्, इत्यनुमानं मानम्; तामसाहङ्कारेण परमाणुभिर्वाऽर्थान्तरत्वात्; नापि तारादयो विशेषाः सामान्यपूर्वकाः, विशेषत्वादित्यनुमानम्; खण्डमुण्डादिषु विशेषेषु गोसामान्यपूर्वकत्वाभावेन विरुद्धत्वात्। तस्मात् तन्मात्रसद्भावे मानं नास्तीति, मैवम्; तामसाहङ्कारस्याकाशादिकारणत्वे आकाशादिषूत्तरोत्तरगुणाधिक्यस्यादृष्टमात्रहेतुकत्वं स्यात्। अतो दृष्टहेतुकत्वाय शब्दतन्मात्रादिहेतुकत्वमभ्युपेयम्। एवं ह्याकाशस्य शब्दतन्मात्रारब्धतया शब्दगुणकत्वम्। वायोः शब्दस्पर्शतन्मात्रारब्धतया (द्वय?) गुण[द्वय]कत्वम्। तेजसः शब्दस्पर्शरूपतन्मात्रारब्धतया गुणत्रयकत्वम्। जलस्य शब्दस्पर्शरूपरसारब्धतया गुणचतुष्टयाधिकरणत्वम्। पृथिव्याः शब्दस्पर्शरूपरसगन्धतन्मात्रारब्धतया गुणपञ्चकाधिकरणत्वं युज्यते।

न च तत्तद्गुणाधिकरणपरमाणूपादानतया तत्तद्गुणाधिकरणत्वमेतेषामिति युक्तम्; सूक्ष्मस्य गुणस्यैव कारणत्वसम्भवे गुणाधिकरणस्य सूक्ष्मस्य कारणत्वकल्पनायां गौरवात्। तस्मात्तन्मात्राण्येव भूतानामुपादानत्वेनाभ्युपेतव्यानि। तदुक्तं श्रीमत्पौष्करे—

तन्मात्राण्यपि वर्ण्यन्ते क्रमात्प्राप्तानि सम्प्रति।
बाह्येन्द्रियपरिच्छेद्यगुणत्वाद्भूतसंहतिः॥
प्रत्यक्षत्वेऽस्मदादीनां स्थिता कारणपूर्विका।
यत्तत्र कारणं विप्राः सा तु तन्मात्रसंहतिः॥
विशेषत्वाच्च शब्दादेस्ते च सामान्यपूर्वकाः।
यत्तत्रापि च सामान्यं तन्मात्रमिति भावयेत्॥
एकाद्वित्रिचतुःपञ्चगुणास्तन्मात्रसंहतिः।
अत एव हि भूतानामभियोगो गुणैः क्रमात्॥
स्थौल्यसौक्ष्म्यकृतो भेदो भूततन्मात्रयोरिव॥ इति॥

(पौ. पुं. प. श्लो. ४४१–२४५)

तन्मात्रारभ्यं तत्त्वं भूतम्। इन्द्रियग्राह्य (जातीय) गुणाधिकरणं वा। तच्चाकाशादिभेदेन पञ्चविधम्। तत्रावकाशप्रदानव्यापारकं तत्त्वमाकाशः। स्पर्शतन्मात्रानुपादेयत्वे सति शब्दतन्मात्रोपादेयं वा। अस्य च शब्द एव गुणः। गुणत्वं चास्योत्कर्षापकर्षयोगित्वेनानुमेयम्। ननु शब्दस्य भेर्यादिगुणत्वोपपत्तेः कथमाकाशसिद्धिरिति चेन्न; श्रोत्रसन्निकर्षाय शरपातन्यायेन शब्दं प्रत्युपादानत्वेनाऽऽकाशसिध्द्युपपत्तेः भेर्यादिर्नोपादानम्; किन्तु निमित्तमेव। नन्वस्य कथं शब्द एव गुणः? नीलं नभ इत्यनुभवेन रूपस्यापि सत्त्वात्। निस्पर्शत्वादिना नीरूपत्वानुमानस्य प्रत्यक्षबाधितत्वादिति चेन्न; यस्मिन्नेव प्रदेशे दूरान्नीलोपलम्भस्तत्रैव समीपोपसर्पणेन तदभावोप[1]ल-

1 लब्ध्या (दे).

ब्धेस्तज्ज्ञानस्य दूरत्वादिदोषजन्यतया भ्रमत्वनिश्चयात् । न चास्य सकलमूर्तद्रव्याभावत्वेनोपपत्तेस्तत्त्वान्तरत्वकल्पनं निरर्थकमिति वाच्यम्; शब्दगुणस्य निराश्रयत्वप्रसङ्गात् । अभावस्य समस्तभूतावकाशप्रदानगमनागमनाद्याधारत्वरूपभावधर्मानुपपत्तेश्च । तदुक्तं-श्रीमत्पौष्करे—

महाभूतानि जायन्ते क्रमात्तन्मात्रपञ्चकात् ।
आकाशं पवनस्तेजस्तोयं भूरिति सञ्ज्ञया ॥
गमागमादिव्यापारो यस्मिन्सति नृणां भवेत् ।
तद्धेतुभूतमाकाशमिष्यतां मुनिपुङ्गवाः ॥
नो चेत्तदवकाशाख्यं [1] विहरेयुः क्व जन्तवः ।
न हि भूम्यन्तरा दृष्टौ प्राणिनां तु गमागमौ ॥
तस्मादाकाशमेष्टव्यमवकाशस्य कारणम् ।
किं च तीव्रादयः शब्दा गुण्यपेक्षा गुणत्वतः ॥
गुणी चाकाशमित्युक्तं तच्च नृणामतीन्द्रियम् ।

ऋषयः—

ननु प्रत्यक्षमाकशमुत्पतत्खगदर्शनात् ॥
अनक्षं चेन्न दृश्येत पक्षिणो दिवि यद्गतिः ।

ईश्वरः—

एवं चेन्मूर्तमाकाशं स्पर्शादिगुणयोगतः ॥
इत्यादि [2] वदतः पृथ्वीसाधर्म्येणातिशोभते ।
अन्यस्य कार्येणान्यस्य स्वरूपपरिनिश्चये ॥
आलोकेन हि संयोग आकाशे दृश्यते तयोः ।
नीलं व्योमेति तन्मिथ्या दूरत्वादिनिबन्धनात् ॥
व्योमानक्षं दविष्टत्वाद्यथा तन्मात्रसंहतिः ।

---

[1] विचरेयुः (दे). [2] गुणत. (दे).

ऋषयः—

व्योमाह्वयकृतः कश्चिद्भावो नास्त्यवकाशतः ॥
अवकाशश्च पृथ्व्यादेरभावात्मक एव सः ।
इत्याहुरपरे तत्र समाधानं विधीयिनाम् ॥

ईश्वरः—

अभावो भावधर्मस्तु तथा भावोऽपि तद्गतः ।
यद्यभावो न तद्धर्मो घटाभावः पटस्य च ॥
अभावोऽयं पदार्थस्य धर्मश्चेच्छशशृङ्गवत् ।
सर्वदानुपलम्भः स्यादिति चैतदचोदनम् ॥
अभावोऽनुपलब्धिर्हि सा च कार्यसमाश्रिता ।
तद्धेतोः कार्यभूता सा तामसोद्रेकतः स्थिता ॥
अभावः शक्त्यवस्थातो भावकार्यात्मना स्थितिः ।
भावाभावौ न चैकत्र भावानां तेन संमतौ ॥
मूर्ताभावोऽप्यभावत्वान्मूर्तेष्वेव व्यवस्थितः ।
तत्कथं तदभावोऽयमवकाशो भवेदिह ॥
यो यस्य धर्मस्तस्येह युक्ता तद्धर्मिणि स्थितिः ।
अवकाशः पुनः सोऽयं व्यापी सर्वत्र दृश्यते ॥ इति ॥

(पौ. पु. प. श्लो. २७९–२९४)

रूपतन्मात्रानारब्धत्वे सति स्पर्शतन्मात्रारभ्यो वायुः। अस्य च शब्दस्पर्शौ गुणौ। ननु शब्दो न वायुगुणः, श्रोत्रग्राह्यत्वात्, यो वायुगुणः स न श्रोत्रेण गृह्यते, यथा स्पर्शः; वायुर्वा न शब्दगुणकः, आकाशेतरत्वात्, यः शब्दगुणकः स आकाश इत्यनुमानाभ्यां शब्दस्य वायुगुणकत्वाभावनिश्चयात् कथं शब्दस्य वायुगुणत्वमिति चेन्न; शकशकादिध्वनेर्वायुगतत्वेनोपलम्भेनानुमानयोः प्रत्यक्षबाधितत्वात्।

एवं धमधम, छलछल, [1]बडबडादिध्वनीनामग्न्यादिगतत्वानुभवात्तेजः-प्रभृतीनामपि शब्दगुणकत्वम्। अयं च त्वगिन्द्रियजप्रत्यक्षविषयः; वायुं स्पृशामीत्यनुभवादुद्भूतस्पर्शवत्त्वाच्च। न च नीरूपस्य कथं प्रत्यक्षविषयत्वमिति युक्तम्; रूपस्य चाक्षुषतायामेव प्रयोजकत्वात्।

रसतन्मात्रानारभ्यत्वे सति रूपतन्मात्रारभ्यं तेजः। अस्य च शब्दस्पर्शरूपाणि गुणाः। तस्य च यद्यपि प्रकाशकस्वभावतया ज्ञानेन्द्रियवत्सात्त्विकाहंकारारब्धत्वमेवोचितम्; तथापि घटाद्यपेक्षया प्रकाशकत्वेऽपीन्द्रियापेक्षया प्रकाश्यत्वात् परम्परया तामसाहंकारा-रब्धत्वमुक्तमिति द्रष्टव्यम्।

गन्धतन्मात्रानुपादेयत्वे सति रसतन्मात्रोपादेयं जलम्। अस्य रसोऽपि गुणः। अस्य च शब्दः छलछलः, स्पर्शः शीतो, रूपं शुक्लं, रसो मधुरः। कूपादिषु रसभेदप्रतीतेराश्रयभेदकृतत्वात्॥

गन्धतन्मात्रारभ्या पृथिवी। अस्याश्च गन्धोऽपि गुणः। अत्र रूपं श्वेतनीलपीतहरितरक्तकपिशभेदभिन्नम्। रसोऽपि मधुराम्ललवण-तिक्तकटुकषायभेदभिन्नः। स्पर्शोऽनुष्णाशीतः। गन्धः सुरभिरसुरभिश्च। [2]स च पाकजापाकजभेदेन द्विप्रकारः। अस्याश्च शब्दः खड खडः। एते च प्रकृत्यादयः पृथिव्यन्ता अप्यशुद्धभोग्यकाण्ड इत्यभिधीयन्ते। इन्द्रियादीनां स्वतो भोग्यत्वाभावेऽप्यालोचनादिद्वारा बुद्धौ विषयार्प-कत्वेन विषयावच्छिन्नबुद्धिरूपभोग्यसम्पादकत्वेन भोग्यत्वमिति भोग्य-काण्डान्तर्भाव उपपन्नः। तदुक्तं श्रीमत्पौष्करे—

वाय्वादीनां समुत्पत्तिः क्रमेणैवाभिधीयते।
वायुरग्निस्तथा तोयं पृथ्वीत्येतच्चतुष्टयम्॥
अनिलः स्पर्शतन्मात्रादभवद्व्यूहनात्मकः।
उत्क्षेपणादिव्यापारहेतुत्वेनोपकारकः॥

---

[1] खडखडादि (दे). [2] तौ च (मै).

दशधा वर्तमानोऽन्तः शरीरे सर्वजन्तुषु ।
प्राणापानसमानादिव्यानोदानादिसंज्ञया ॥
अनलो रूपतन्मात्राज्जायते पक्तिलक्षणः ।
स च [1] त्रिधा स्थितो लोके गार्हपत्यादिसंज्ञया ॥
अतोऽन्य एव शैवाग्निस्ततो बिन्दूदरान्तरे ।
यद्यदश्नाति लोकोऽयं तदनेनैव पच्यते ॥
अतोऽयमनलोऽत्यन्तं प्राणिनामुपकारकः ।
अभवद्रसतन्मात्रात्तोयं सङ्ग्रहणक्रियम् ॥
तोयेनैव प्रतिष्ठास्य स्थिता लोकस्य वस्तुनः ।
स्वतो धूल्यात्मकत्वेन पृथ्वी चानेन वै दृढा ॥
पृथिवी गन्धतन्मात्रादभवद्धारणक्रिया ।
नाकाशाज्जायते वायुर्न वायोरग्निसम्भवः ॥
नाग्नेरापस्ततः पृथ्वी धर्मातिशयदर्शनात् ।
कारणाद्गुणसंक्रान्तिर्युक्ता कार्येषु न स्वतः ॥
व्योम्नः पञ्चगुणत्वं स्यात्तथा सृष्टिक्रमो यदि ।
तन्मात्रपञ्चकाज्जातं ततो व्योमादिपञ्चकम् ॥ इति ॥

(पौ. पुंस्त्व. प. श्लो. ३४९-३५८)

तथा श्रीमन्मतङ्गे—

अभवच्छब्दतन्मात्रं सूक्ष्मं नैवोपलभ्यते ।
*[2] तन्मात्रशब्दः शेषार्थविनिवृत्त्यर्थमुच्यते ॥

---

[1] त्रेधा (दे).

*अत्र मुद्रितमतङ्गागमे 'तन्मात्रशब्दः' इत्यतः पूर्वं—
वक्तव्यं ते मुनिव्याघ्र पुरस्तात्सुविचार्य तु । इत्यधिकः पाठो दृश्यते ।

[2] तन्मात्रशेषः शब्दार्थो विनिवृत्त्यर्थमुच्यते । इति मु. म.—पाठ .

अतोऽन्यत्स्पर्शतन्मात्रं किञ्चिच्छब्दसमन्वितम् ।
रूपतन्मात्रमप्येवं शब्दस्पर्शसमन्वितम् ॥
ततोऽन्यद्रसतन्मात्रं प्रागुक्तत्रितयान्वितम् ।
गन्धतन्मात्रमप्येवं चतुष्टयसमन्वितम् ॥ इति ॥
(मतङ्ग. अह. प. श्लो. १०१-१०४)

श्रीमन्मृगेन्द्रे च —
व्योमप्रभञ्जनाग्न्यम्बुभूमयो भूतपञ्चकम् ।
शब्दाद्येकोत्तरगुणमवकाशादिवृत्तिमत् ॥
धूननज्वलनप्लावखरत्वावेदिनो गुणाः ।
शब्दा वाय्वादिषु व्योम्नि सवर्णप्रतिशब्दगाः ॥
व्यूहोऽवकाशदानं च पक्तिस्तद्वहधारणाः ।
वायुव्योमहुताशाम्बुधरणीनां च वृत्तयः ॥ इति ॥
(मृ. प्र. ११ श्लो. १७-२९)

अन्यत्र—
खविशेषगुणः शब्द आश्रयादन्यतः स्थितेः ।
हेतुर्वैशेषिकोक्तोऽयं हेत्वाभासोऽवगम्यते ॥
कालात्ययापदिष्टश्च प्रत्यक्षागमबाधतः ।
पृथिव्यां खडखडः शब्दो जले छलछलोऽनले ॥
धकधकः शकशको वायौ व्योम्नि प्रतिध्वनिः ॥ इति ॥

श्रीमन्मृगेन्द्रे च—
इति पञ्चसु शब्दोऽयं स्पर्शो भूतचतुष्टये ।
अशीतोष्णौ महीवाय्वोः शीतोष्णौ वारितेजसोः ॥
भास्वदग्नौ जले शुक्लं क्षितौ शुक्लाद्यनेकधा ।

रूपं त्रिषु रसोम्भस्सु मधुरः षड्विधः क्षितौ ॥
गन्धः क्षितावसुरभिः सुरभिश्च मतो बुधैः ।
व्यूहोऽवकाशदानं च पक्तिसङ्ग्रहधारणाः ॥
वायुव्योमहुताशाम्बुधरणीनां च वृत्तयः ।
देहेऽस्थिमांसकेशत्वङ्नखदन्तेषु चावनिः ॥
मूत्ररक्तकफस्वेदशुक्रादौ वारि संस्थितम् ।
हृदि पक्तौ दृशोः पित्ते तेजस्तद्धर्मदर्शनात् ॥
प्राणादिवृत्तिभेदेन नभस्वानुक्त एव ते ॥ इति ॥

(मृ. प्र. १२ श्लो. २६–३०)

[1]एतैश्च कलाद्येकत्रिंशत्तत्त्वैरारब्धानि शरीराणि पुंसां भोगसाधनानि । लोकान्तरगत्यागतिहेतुभूतं तु पुर्यष्टकाख्यं सूक्ष्मशरीरम् । तच्च तन्मात्रपञ्चकमनोबुद्ध्यहंकारात्मकम् । तदुक्तं त्रिशतीकालोत्तरे—

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
मनो बुद्धिरहङ्कारः पुर्यष्टकमुदाहृतम् ॥ इति ॥

एतत्सद्भावेऽनुमानमपि—आत्मनः परलोकगत्यादिकं, किञ्चित्करणसाध्यम्, क्रियात्वात्, स्थूलशरीरक्रियावत् । न चैतद्व्यापकस्यात्मनः स्वतः सम्भवतीति औपाधिकं वाच्यमित्युपाधित्वेन तत्सिद्धिः ॥

तदेवं तिरोधानशक्तिमलबिन्दुमायाकर्मरूपाः पञ्च पाशा इति सिद्धम् ॥

इति श्रीमदतिवर्णाश्रमाचार्यवर्यशैवपरिपालकशिवाग्रयोगीन्द्रज्ञानशिवाचार्यविरचितायां
शैवपरिभाषायां पाशपदार्थो नाम
चतुर्थः परिच्छेदः ॥

———

[1] एतानि च कलाद्येकत्रिंशत्तत्त्वारब्धानि (मै)

## अथ पञ्चमः परिच्छेदः

एतेषां च पाशानामसंस्पर्शे शिवैक्येन शिवानन्दाभिव्यक्तिलक्षणां मुक्तिं क्रमेणायमात्मा प्राप्नोति। तथा हि—ब्राह्मणः क्षत्रियो वैश्यः सच्छूद्रः सवर्णाद्यनुलोमजातिश्च यदा कर्मसाम्यमलपरिपाकाभ्यां युज्यते तदा तस्मिन् पारमेश्वरी शक्तिः पतति। तदा तस्य श्रेयोवेदने श्रद्धा जायते। विषयेभ्यश्च दोषदर्शनाद्यधीनं वैराग्यं भवति। एवं सञ्जातवैराग्यः श्रेयोवेदनाय गुरुकुलमुपसर्पति। तस्माच्च गुरोर्भक्त्याद्यनुमितस्वाधिकारात् समयदीक्षां लब्ध्वा समयिधर्मान् शिवारामपरिपालनशिवालयसंमार्जनशिवपूजोपयुक्तपुष्पाद्याहरणशिवभक्तपूजाभस्मोद्धूलनत्रिपुण्ड्ररुद्राक्षादिधारणादीननुतिष्ठति ॥

एवमनुतिष्ठतोऽस्य पूर्वं मन्दतरतया स्थितः शक्तिपातो मन्दो भवति। तदा अस्य शिवपूजाऽऽगमाध्ययनादौ श्रद्धा जायते। अनन्तरं तादृशश्रद्धापरिपाकाभिज्ञाद्गुरोरागमाध्ययनशिवपूजाद्यधिकारभूतां विशेषदीक्षां लभते। तदनन्तरं गुरूपदिष्टागमाध्ययनादौ श्रद्धा जायते। शिवपूजादीन् पुत्रकधर्माननुतिष्ठति। एवमागमोक्तपुत्रकधर्मान् वैदिकांश्च नित्यादीनाचरतोऽस्य पूर्वं मन्दतया स्थितः शक्तिपातस्तु [1]सद्यो भवति। तदा चातिपक्वमलतया प्रथममापातप्रतिपन्नेषु आगमार्थेषु पूर्वापराविरोधेन तत्त्वजिज्ञासा जायते। अनन्तरं तदभिज्ञाद्गुरोस्तत्त्वज्ञानप्रतिबन्धकर्तृसकलसञ्चितकर्मनिबर्हणीं निर्वाणदीक्षां प्रपद्यते। अनन्तरं स्वात्मनः किञ्चिज्ज्ञत्वादि कर्ममलादिकृतं, शिवैक्येन सर्वज्ञत्वादिकमेव स्वाभाविकमिति गुरूपदेशेन प्रतिपद्यते। अनन्तरं च तमेवार्थं युक्तिभिः प्रतिष्ठाप्य निरन्तरं ध्यायते। एवं निरन्तराभ्यासे

---

1 अत्रैतद्द्राविडपरिवर्तनानुरोधेन तीव्रपदेन भवितव्यम्.

तत्परिपाकसहकृतया गुरुकृपया स्वरूपज्ञानमभिव्यज्यते। तस्मिन्नेव क्षणे मलेन च विनिर्मुक्तो भवति। एवं मलविमुक्तोऽपि प्रारब्धेन कर्मणा देहबन्धमनुभवन्नास्ते। एवं निष्पन्नतत्त्वज्ञानतया तदुत्पादककर्मणोऽनपेक्षितत्वेऽपि कदाचित्तदनुतिष्ठति। कदाचित् तत्परित्यजति। कदाचिन्निषिद्धमपि कर्मानुतिष्ठति। न च तैर्लिप्यते। एवं प्रारब्धकर्मफलं सुखं दुःखं वानुभवति। तथापि तत्र न सज्जते। न वा विषीदति। एवं स्थितः प्रारब्धभोगान्ते मलकर्मणोरभावेन मायाया अपि देहादिद्वारा बन्धकत्वासम्भवेनैकीभूतः सन् अलौकिकमद्भुतं वाचामगोचरं अखण्डाकारसच्चिदात्मकं शिवानन्दं लभते। इयमेव मोक्षावाप्तिः। एतत्सर्वं क्रमेणोपपाद्यते। तथा हि—दीक्षायां चत्वारो वर्णाः षडनुलोमाश्चाधिकारिणः। अनुलोमाश्च सवर्णादयः। तत्र क्षत्रियायां ब्राह्मणाज्जातः सवर्णः। वैश्यायां तस्मादेव जातो निषादः तस्मादेव शूद्रायां जातः पारशवः। वैश्यायां क्षत्रियाज्जातो माहिष्यः तस्मादेव शूद्रायां जातो दौष्यन्तः। शूद्रायां वैश्याज्जात उग्रः। एतेभ्यो दशभ्योऽतिरिक्ता दीक्षायां नाधिकारिणः। तेषामागमपुराणादिश्रवणस्य—

अन्ये च ब्राह्मणा विष्णो राजानश्च तथैव च।
वैश्याश्च तारतम्येन ज्ञानाभ्यासेऽधिकारिणः॥
अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम्।
अन्येषामपि सर्वेषां ज्ञानाभ्यासो विधीयते॥
भाषान्तरेण कालेन तेषां सोऽप्युपकारकः।

इत्यादिना भाषान्तरश्रवणविधानमुखेन निषिद्धत्वात्। यद्यपि चात्रान्यशब्दोऽनुलोमानामप्युपस्थापकः। तथापि जामदग्न्यविदुरादीनामनुलोमानां वेदाध्ययनभागवतश्रवणादेस्तत्र तत्रोक्ततया तदन्यविषयः।

एवं च वर्णानुलोमातिरिक्तानामागमाध्ययनं प्रत्यनधिकारे तदङ्गभूत-दीक्षायामप्यनधिकार एव । प्रधानाधिकारिण एवाङ्गेऽधिकारात् । यद्यपि शूद्रस्यापि—

दीक्षा कार्या हि सर्वेषां तच्छक्तिविधियोगिनाम् ।
त्रयाणामपि वर्णानां न तु शूद्रान्त्यजातिषु ॥

इति दीक्षायामधिकारो निषिद्धः । तथापि—

अमद्यपास्तु ये शूद्राः शौचाचारक्रियादराः ।
शिवभक्ताश्च ये तेषां दीक्षा कार्यान्यथा न हि ॥

इति निषेधोऽसच्छूद्रविषयतया व्यवस्थापित इति सच्छूद्रस्यैवाधि-कारः । तथा मलपरिपाकः कर्मसाम्यं चाधिकारिविशेषणम् ।

परिपाको मलस्यैव किं त्वनुग्रहकारणम् ।

इत्यादिवचनात् ।

तस्य शिष्यस्य विप्रेन्द्राः कर्मसाम्ये सति द्विजाः ।
शाम्भवी शक्तिरत्यन्तं तस्मिन् पतति चिद्घना ॥

इत्यादि वचनाच्च । तत्र कर्मसाम्यं समबलयोः विरुद्धफलयोः पुण्यरूपयोरपुण्यरूपयोः पुण्यापुण्यरूपयोर्वा युगपत्फलोन्मुख्यम् । इदं च तिरोधानशक्तिनिवर्तनद्वारा अनुग्रहशक्तिनिपाते हेतुरित्यधिकारिविशेषणम् । अतुल्यबलत्वे अविरुद्धफलत्वे च तत्फलभोगस्यावश्यकत्वेन तिरोधानशक्तेर्निवर्तयितुमशक्यत्वान्न तत्र कर्मसाम्यमिति तद्व्यावर्तनाय तुल्यबलत्वं विरुद्धफलत्वं च विशेषणमुपात्तम् । मलस्य परिपाको हि विश्लेषौन्मुख्यावस्थाविशेषः । मलपरिपाकादियुक्तेऽधिकारिणि शक्तेः पातोऽपि परिपाकादेः पूर्वं संवृतायाः परिपाकादौ सति सुव्यक्तायास्तस्या अनुग्रहौन्मुख्यमेव । अस्य च शक्तिपातस्य संसारविद्वेषमुमुक्षा-शिवभक्त्यादीनि चिह्नानि । एतैश्चिह्नैरधिकारिणं ज्ञात्वैव गुरुणा दीक्षा

कर्तव्या । गुरुश्च चातुर्वर्णिक एव । तत्र ब्राह्मणो ब्राह्मणादीनां चतुर्णामनुलोमानां च षण्णां गुरुः । क्षत्रियः क्षत्रियादीनां नवानाम् । वैश्यो वैश्यादीनामष्टानाम् । शूद्रः शूद्रस्यैव । आश्रमक्रमेऽपि सन्न्यासी सन्यासिप्रभृतीनां चतुर्णाम् । वानप्रस्थो वानप्रस्थादीनां त्रयाणाम् । गृहस्थो गृहस्थब्रह्मचारिणोः । ब्रह्मचारी तु यदि नैष्ठिकस्तदा सन्न्यासिव्यतिरिक्तानां त्रयाणाम् । उक्तरूपस्य गुरोरसम्भवे क्षत्रियो ब्राह्मणस्य गुरुः । वैश्योऽपि क्षत्रियस्य । शूद्रस्तु शूद्रस्यैव । न कदाचित् स्वोत्तमवर्णस्य गुरुः । एवमाश्रमक्रमेऽपि वानप्रस्थः सन्न्यासिनोऽपि गुरुः । गृहस्थो वानप्रस्थसन्न्यासिनोरपि । ब्रह्मचारी गृहस्थवानप्रस्थसन्न्यासिनामपि । चातुर्वर्णिकोऽपि वृत्तवयोयोनिगुणाकारादिसम्पन्नो दोषहीन एव गुरुः । गुरुश्च न पशुत्वयोगी । किं तु निगमागमादिश्रवणमनननिदिध्यासनपरिपाकाधीनसाक्षात्कारेण सम्पन्नशिवभावः ।

आचार्यमूर्तिमास्थाय चतुर्धा शक्तिपाततः ।
भगवाननुगृह्णाति स एव सकलानपि ॥
आचार्यं शिव एवाहुः . . . . ।

इत्यादिवचनात् । कुम्भादिष्विव गुरौ सन्निधानेन शिवस्यानुग्रहकर्तृत्वमिति औपचारिकार्थपरिग्रहस्य मुख्यार्थबाधाभावेऽयुक्तत्वात् । एवंविधाद्गुरोरुक्तरूपेणाधिकारिणा प्रथमं समयदीक्षा लब्धव्या ॥

दीक्षासामान्यलक्षणं तु आगमिकनित्याद्यधिकारागमश्रवणाद्यधिकारान्यतरनिर्वर्तनसमर्थशिवव्यापारत्वम् । तत्र समयदीक्षा विशेषदीक्षा च शिवालयपरिचर्याशिवपूजादिनित्याद्यधिकारसम्पादिका। निर्वाणदीक्षा तु आगमश्रवणमननाद्यधिकारसम्पादिका। चातुर्वर्णिकत्वादिनियतव्यापारानुलोमनियतव्यापारव्यावृत्तये शिवव्यापारग्रहणम् । इयं च दीक्षा चाक्षुष्यादिभेदेन सप्तविधा । तत्र पाशबन्ध-

विमोक्षाभिप्रायेण वीक्षणं चाक्षुषी दीक्षा। तेनैवाभिप्रायेण दक्षिण-हस्तेन स्पर्शनं स्पर्शदीक्षा। तदुद्देशेनैव संहितामन्त्रोच्चारणं वाचिकी दीक्षा। अस्य पाशविमोक्षो भवत्विति मनसाभिध्यानं मानसदीक्षा। तदाभिप्रायेण शास्त्रप्रदानं शास्त्रदीक्षा। तदुद्देशेनैव शिवे संयोजनं योगदीक्षा। कुण्डमण्डपादियुक्ता हौत्री। सापि द्विविधा। ज्ञान-वती क्रियावती चेति। यत्र कुण्डमण्डपादिषु क्रियमाणं कर्म क्रमेण मनसैव निर्वर्त्यते सा ज्ञानवती। इयं च ज्ञानवती दीक्षा शैवसन्न्यास-पद्धतौ स्पष्टमुक्ता तत्र द्रष्टव्या। यत्र तु कायव्यापारेण सा क्रिया-वती। क्रियावत्यपि द्विविधा। निर्बीजा सबीजा चेति। तत्र स्त्रीबालवृद्धव्याधिग्रस्तादीनामसमर्थानां समयाचारसंशोधनेन समया-चारहीना निर्बीजा। इयमपि द्विविधा। सद्योनिर्वाणदा असद्यो-निर्वाणदा चेति। यत्र प्रारब्धकर्मणोऽपि विशोधनं सा सद्योनिर्वा-णदा। यद्यपि प्रारब्धस्य भोगेनैव तत्र तत्र विनाशः प्रतिपादितः। तथापि स तीव्रवेगप्रारब्धविषयः। प्रारब्धं हि तीव्रवेगमन्दसुप्तभेदेन चतुर्विधम्। तत्र तीव्रवेगयोः भोगं विना न विनाशः। मन्दस्य दीक्षायां संयोजनसञ्जननपूर्वकं भोगभोजनेन विनाशः। सुप्तस्य तु भोगभोजनं विनैव नाशः। एवं च यत्र शिष्यगतं तीव्रतरं शक्ति निपातं तादृशं च मलपरिपाकं मन्दं सुप्तं च प्रारब्धं ज्ञात्वाऽत्यन्त-समर्थेन गुरुणा भोगभोजनेन तद्विना वा विनाशः क्रियते, सा सद्योनिर्वाणदा। यत्र प्रारब्धसंशोधनं नास्ति सा असद्योनिर्वाणदा। समयाचारसमर्थानां क्रियमाणा सबीजा। इयमपि शिवधर्मिणी लोकधर्मिणी चेति द्विविधा। धर्माधर्मयोरुभयोरपि यत्र संशोधनं सा शिवधर्मिणी। अधर्ममात्रस्य यत्र संशोधनं सा लोकधर्मिणी। क्रियावती प्रकारान्तरेण त्रिविधा। समयदीक्षा विशेषदीक्षा निर्वाण-दीक्षा चेति। यत्र रुद्रपदे योजनं क्रियते सा समयदीक्षा। यत्र

श्वरपदे योजनं सा विशेषदीक्षा। अनयोरुभयोरपि नास्ति शिखाच्छेदः। यत्र शिवपदे योजनं सा निर्वाणदीक्षा। यत्र निर्वाणदीक्षापूर्वकं सन्न्यासः तत्र त्वस्ति शिखाच्छेदः। निर्वाणदीक्षायामध्वशुद्धिः कार्येति अध्वा निरूप्यते।

अध्वा च मन्त्रपदवर्णभुवनतत्त्वकलाभेदेन षड्विधः। तत्र उत्तरोत्तरः पूर्वपूर्वव्यापकः। मन्त्रा एकादश। पदान्येकाशीतिः। वर्णाः पञ्चाशत्। भुवनानि चतुर्विंशत्यधिकद्विशतसंख्यानि। तत्त्वानि षट्त्रिंशत्। कलाः पञ्च। तत्र निवृत्तिकलायां पृथिव्याख्यं तत्त्वमेकम्। कालाग्न्यादीनि अष्टोत्तरशतं भुवनानि। तत्र ब्रह्माण्डकरण्डमध्ये षट्। प्राच्याद्यासु दशसु दिक्षु दश दश। ऊर्ध्वे द्वे। तदेवमष्टोत्तरशतं भुवनानि। सद्योजातहृदयाख्यौ मन्त्रौ। अष्टाविंशतिः पदानि। वर्ण एकः। पदवर्णानां स्वरूपमन्यत्र प्रदर्शितम्। वर्णः पीतः। मण्डलं चतुरश्रम्। गन्धादयो विषयाः। ब्रह्मा कारणम्। प्रतिष्ठाकलायां तत्त्वानि त्रयोविंशतिः। तानि च जलादीनि प्रकृत्यन्तानि षट्पञ्चाशद्भुवनानि। तानि चामरेशादीनि श्रीकण्ठान्तानि। तानि जलतेजोऽनिलाकाशेषु तन्मात्रेन्द्रियमनोगर्भेऽहङ्कारबुद्ध्यव्यक्तयोश्चाष्टावष्टौ। शिरोवामदेवौ मन्त्रौ। एकविंशतिः पदानि। वर्णास्त्रयोविंशतिः। वर्णः शुक्लः। मण्डलमर्धचन्द्राकारम्। विषया रसादयः। कारणं विष्णुः। विद्याकलायां तत्त्वानि सप्त। तानि च पुरुषादिमायान्तानि। भुवनानि सप्तविंशतिः। तानि च वामादीन्यङ्गुष्ठमात्रान्तानि। तत्र पुरुषे षट्। रागनियतिमायासु पञ्च पञ्च। इतरेषु द्वे द्वे। शिखाघोरौ मन्त्रौ। विंशतिः पदानि वर्णाः सप्त। वर्णः शोणः। मण्डलं त्रिकोणम्। विषया रूपादयः। कारणं रुद्रः। शान्तिकलायां तत्त्वानि त्रीणि। तानि (शुद्ध) विद्यादीनि सदाशिवान्तानि। भुवनान्यष्टादश। तानि वामादीनि

सदाशिवान्तानि। तत्र विद्यायां नव। ईश्वरे अष्टौ । सदाशिव एकम्। तत्पुरुषकवचौ मन्त्रौ। पदान्येकादश। वर्णास्त्रयः। मण्डलं षट्कोणम्। विषयाः स्पर्शादयः। कारणमीश्वरः। शान्त्यतीतकलायां शक्ति-शिवाख्ये तत्त्व। भुवनानि पञ्चदश। तानि निवृत्त्यादीनि अनाश्रितान्तानि। तत्र शक्तितत्त्वे चत्वारि। शिवतत्त्व एकादश। शिवास्त्रेशाना मन्त्रास्त्रयः। पदमेकम्। वर्णाः षोडश। (शुक्लवर्णः) स्फटिकाभः। मण्डलं वृत्तम्। विषयः शब्दः। कारणं सदाशिवः। तदेवं पञ्चाध्वगर्भितासु कलासु संयोजनादिक्रमेण शुद्धिः कार्या॥

तदेवं स्थिते समयदीक्षां लब्ध्वा गुरुणा शिक्षितान् समयिधर्माननुतिष्ठेत्। समयिधर्माश्च शिवालयशिवभक्तपरिचर्यादयः त्रिपुण्ड्ररुद्राक्षधारणादयश्च। अस्य च समयिधर्मस्य दासमार्ग इति व्यवहारः। एतच्च त्रिपुण्ड्ररुद्राक्षधारणादिकं न केवलं समयिमात्रस्यानुष्ठेयम्। किं तु सर्वेषामपि नित्यकर्मवन्नित्यतयानुष्ठेयम्। अननुष्ठाने पातकादिश्रवणेनानुष्ठानश्रद्धाप्रशंसया नित्यत्वोक्त्यादिभिश्च तस्य नित्यतया विधानात्। तथा हि—स्कान्दे अकरणे पातकं श्रूयते—

त्रिपुण्ड्रोद्धूलनादौ च तन्मानश्रवणेऽपि च।
वाञ्छा न जायते येषां ते महापापसंयुताः॥ इति।

वासिष्ठलैङ्गे—

येषां भस्मनि विद्वेषो वर्तते हृदये सदा॥ (अ. ५ श्लो. २६)
संकीर्णा तु भवेद्ब्रह्मंस्तेषां वंशपरम्परा। (अ. ५ श्लो. २७)
येषां क्रोधो भवे[1]न्नित्यं ललाटे भस्मदर्शनात्॥ (अ. ५ श्लो. २२)
तेषामुत्पत्तिसांकर्यमनुमेयं विपश्चिता।

---

[1] द्ब्रह्मन् (मै).

ये भस्मधारिण दृष्ट्वा वाचा निन्दन्ति मानवाः॥ (अ. ५ श्लो. २३)
तेषां शूद्रेण सम्भूतिरनुमेया विपश्चिता।
ये भस्मधारिणं दृष्ट्वा नराः कुर्वन्ति ताडनम्॥ (अ. ५ श्लो. २४)
तेषां चण्डालतो जन्म ब्रह्मन्नूह्यं विपश्चिता।
येषां श्रद्धा मुने नास्ति श्रौतभस्मनि सर्वदा॥ (अ. ५ श्लो. २५)
गर्भाधानादिसंस्कारस्तेषां नास्तीति निश्चयः॥ (अ. ५ श्लो. २६)

इत्यादिना अननुष्ठातॄणां जन्मसाङ्कर्यं द्विजसंस्काराभावश्च श्रूयते। तथा पराशरोपपुराणे—

त्वद्भक्ता ब्राह्मणाः साक्षात्त्रिपुण्ड्रे भस्मकुण्ठने।
भवेयुर्विमुखा नित्यं वेदसिद्धे विमुक्तिदे॥ (अ. ३ श्लो. ३५)

इति तत्परित्यागस्य शापफलत्वं श्रूयते। तथा तत्रैव—

वेदोत्कर्षे शिवोत्कर्षे विद्योत्कर्षे तथैव च।
त्रिपुण्ड्रोद्धूलनोत्कर्षे श्रद्धा पुण्यवतो भवेत्॥
अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम्।
वेदोक्तेनैव मार्गेण त्रिपुण्ड्रे जायते मतिः॥
(अ. ६ श्लो. २१, अ. ४ श्लो. २७–२८)

इति त्रिपुण्ड्रादिश्रद्धा महापुण्यफलत्वेन स्तूयते। तथा तत्रैव—

ब्राह्मणो विधिनोत्पन्नं त्रिपुण्ड्रं भस्मनैव तु।
ललाटे धारयेन्नित्यं तिर्यग्भस्मावकुण्ठनम्॥
(अ. ५ श्लो. २५-२६)

इति नित्यशब्दयोगेन विधानं दृश्यते।

आदिब्राह्मणभूतेन त्रिपुण्ड्रं भस्मना धृतम्।
यतोऽत एव विप्रस्तु त्रिपुण्ड्रं धारयेत्सदा॥

भस्मना वेदसिद्धेन त्रिपुण्ड्रं धारयेत्सदा ।

(पराशरोप. अ. ५ श्लो. २७–२८)

इत्यादिना सदाशब्दयोगेन विधानं दृश्यते । किं च तत्रैव—

भस्मना वेदसिद्धेन त्रिपुण्ड्रं देहकुण्ठनम् ।
रुद्रलिङ्गार्चनं चापि मोहतो वापि न त्यजेत् ॥ इति ।

(पराशरोप. अ. १० श्लो. ४०)

स्कान्दे च—

त्रिपुण्ड्रं धारयेद्भक्त्या मनसापि न लङ्घयेत् ।

इति त्यागो निषिध्यते । तथा रुद्राक्षधारणमपि अकरणे दोषकीर्तनादिभिर्नित्यम् । तथा हि स्कान्दे—

अरुद्राक्षधरो भूत्वा यत्किंचित्कर्म वैदिकम् ।
कुर्वन् विप्रस्तु मोहेन नरके पतति ध्रुवम् ॥

इत्यकरणे दोषः कीर्त्यते । बृहन्नारदीये—

बहूनां जन्मनामन्ते महादेवप्रसादतः ।
रुद्राक्षधारणे श्रद्धा स्वभावादेव जायते ॥

इति श्रद्धायाः पुण्यफलत्वोक्तिः । स्कान्दे—

कण्ठे मूर्ध्न्युपवीते वा कर्णे करयुगेऽथ वा ।
रुद्राक्षं धारयेन्नित्यं भक्त्या परमया युतः ॥

इति नित्यशब्दः । वायवीये—

नाभक्त्या धारयेदक्षान् सदा भक्त्यैव धारयेत् ।

इति सदाशब्दयोगेन विधानं द्रष्टव्यम् । अयं च समयिधर्मः तज्जन्मनि विशेषनिर्वाणदीक्षाद्यलाभे सालोक्यफलं दत्वा जन्मद्वयव्यवधानेनैकजन्मव्यवधानेन वा मुक्तिं जनयति । शिवधर्मोत्तरे—

अथ ये सततं भक्त्या भजन्ति शिवयोगिनः ।
ते विन्दन्ति महाभोगानन्ते योगं च शाङ्करम् ॥
भोगयोगार्थिभिस्तस्मात्सम्पूज्याः शिवयोगिनः ।
प्रतिश्रयान्नपानेन शय्यावस्त्रासनादिभिः ॥
इति यः कुरुते भक्तिं सततं शिवयोगिनाम् ।
स द्वितीये तृतीये वा देहे योगमवाप्नुयात् ॥

इत्यादिवचनैस्तथा प्रतिपादनात् । एते च समयिधर्मा यद्यपि सर्वेषामपि पुत्रकानां साधकानां च साधारणाः । तथापि तेषामसाधारणधर्मान्तरसत्त्वादेते समयिधर्मा इत्युच्यन्ते । इत्थं समयिधर्मानुष्ठानाद्विशेषदीक्षाधिकारलाभे विशेषदीक्षां कृत्वा शिवपूजागमाध्ययनादिपुत्रकधर्माननुतिष्ठेत् ।

इत्थं समयदीक्षायां विशिष्टायां विशेषतः ।
वह्निहोमागमज्ञाने योग्यः सञ्जायते शिशुः ॥

इति प्रतिपादितस्य समययुक्तविशेषदीक्षारूपस्य तदधिकारस्य सद्भावात् । तत्र शिवार्चनं मानसं प्रशस्तम् । तत्राशक्तस्तु पञ्चविधशुद्धिकरणपूर्वकमभिषेकालङ्करणनिवेदनस्तोत्रपाठनमस्कारादिकं बहिर्यागशब्दाभिधेयं कुर्यात् । तथा वर्णाश्रमधर्मानप्यनुतिष्ठेत् । तेषां तत्त्वज्ञानसाधनत्वात् ॥

नन्वस्तु तेषां साक्षादेव मुक्तिसाधनत्वम् । गौतमधर्मस्कान्दादिषु तथा प्रतिपादनात् । तत्र गौतमधर्मे—"[1] यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाः स ब्रह्मणः सायुज्यं सलोकतामाप्नोति" इति कर्मणां साक्षान्मोक्षहेतुत्वं प्रतिपादितम् । तथा स्कान्देऽपि—

वर्णाश्रमसमाचारादेव मुक्तिर्नचान्यथा । इति

---

[1] मुद्रितगौतमधर्मपुस्तकेषु एव सूत्रानुपूर्वी न दृश्यते.

अन्यत्रापि—

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।

(भगवद्गीता. अ. ३ श्लो. २०)

इति श्रूयते । न च तेषां फलान्तरे उपयुक्तत्वान्मोक्षफले न सम्बन्ध इति युक्तम् । तथा सति कर्मणां ज्ञानफलेऽपि सम्बन्धाभावप्रसङ्गात् । यद्युत्पत्तिवाक्यावगतस्वरूपाणां कर्मणामधिकारवाक्यद्वयेन परस्परानपेक्षया फलद्वयसम्बन्धः संयोगपृथक्त्वन्यायेन बोधयितुं शक्यत इत्युच्यते ; तर्हि प्रकृतेऽपि मोक्षफलसम्बन्धोऽपि तथा वक्तुं शक्यत इति समानम् ॥

ननु कर्मानुष्ठानस्य पुण्यजननद्वारा भोगहेतुत्वेन मोक्षहेतुत्वं नोपपद्यत इति चेत्, न ; भोगकामनयानुष्ठितानां तेषां भोगहेतुत्वेऽपि मोक्षकामनयानुष्ठितानां मोक्षजनकत्वाविरोधात् । अन्यथा तवापि ज्ञानोत्पादाय तदनुष्ठाने तैर्भोगजननप्रसङ्गात् । नचानेकजन्मार्जितानां सञ्चितकर्मणां ज्ञानं विना निवर्तकाभावात् केवलकर्मभिर्न मोक्षः सम्भवतीति युक्तम् । योगादिसम्पादिताणिमाद्यैश्वर्यायत्तेन कायव्यूहपरिग्रहेण भोगद्वारैव तेषामपोह्यत्वात् । "वर्णाश्रमसमाचाराद्" इत्यादिना कर्मणोपीतरव्यवच्छेदेन कारणत्वस्य प्रतिपादनाद्वचनद्वयाविरोधाय परस्परनैरपेक्ष्येण विकल्पेन साधनत्वस्य कल्पयितुमुचितत्वात् । तस्मात्साक्षात्कर्मणां मोक्षजनकत्वम् । न तु ज्ञानद्वारेति मैवम् । ज्ञानतिलके—

न दानैर्न तपोयज्ञैर्न होमैर्न यमैर्व्रतैः ।
न स्नानतीर्थसम्पातैर्लभ्यते परमं पदम् ॥
अनेकैः पापसङ्घातैरनेकैः पुण्यसञ्चयैः ।
बध्नन्ति सर्वदात्मानं कोशागारक्रिमिर्यथा ॥

इत्यादिना कर्मणां मोक्षहेतुत्वाभावस्य प्रत्युत बन्धहेतुत्वस्य च प्रतिपादनात्। किञ्च मलनिवृत्तिं विना न मोक्षः सम्भवति। शिवानन्दानुभवाच्छादकस्यानुवृत्तेः। न चाज्ञानरूपस्य मलस्य ज्ञानेन विना विनिवृत्तिर्युज्यते।

ज्ञानेन च तदज्ञानं निवर्तेत न कर्मभिः।
ज्ञानं लब्ध्वाचिरादेव शिवसायुज्यमाप्नुयात्॥

इति शिवधर्मोत्तरे मलस्य ज्ञानमात्रनिवर्त्यताप्रतिपादनात्। ज्ञानाभावे सञ्चितकर्मणां प्रक्षयानुपपत्तेश्च। भोगेन प्रक्षये पुनः पुनः कर्मार्जनस्यानिवारणात् कर्मानुष्ठाने आनुषङ्गिकस्याधर्मस्यानिवृत्तेश्च। तस्मान्न केवलकर्मणा मोक्षः॥

नन्वस्तु तर्हि ज्ञानकर्मणोः समप्राधान्येन समुच्चिततया मोक्षहेतुत्वम्। अत एव न विकल्पप्रयुक्तदोषाष्टकमपि। एवञ्च न दानैरित्यादिनिषेधोऽपि ज्ञानं विना कृतकर्मविषयकतयोपपद्यते। समप्राधान्येन समुच्चये तु—

ज्ञानं प्रधानं न तु कर्महीनं
कर्म प्रधानं न तु बुद्धिहीनम्।
तस्मात्तयोरेव भवेत् प्रसिद्धिः
न ह्येकपक्षो विहगः प्रयाति॥

यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम्।
एवं तपश्च विद्या च संयुक्तं भेषजं महत्॥

इत्यादिकं वचनं मानम्। तस्माज्ज्ञानकर्मणी समप्राधान्येन मोक्षसाधनमिति। मैवम्।

न कर्म करणीयं हि बहिस्तस्य महात्मनः।
ज्ञानामृतेन तृप्तस्य भक्त्या च विवशात्मन.

इति शिवधर्मोत्तरे,

न लिङ्गं नाश्रमाचारः परमात्मनि संस्थितौ ।

इति सर्वज्ञानोत्तरे (विद्यापादे. श्लो. ७०),

न ध्यानं न तपः पूजा न होमो नैव साधनम् ।
अग्निकार्यादिकार्यं च नैव तस्य महेश्वरि ॥
नियमोऽपि न तस्यास्ति क्षेत्रपीठादिसेवनम् ।
नार्चनं पितृकार्यं च तीर्थयात्राव्रतानि च ॥

इति देवीकालोत्तरे च सञ्जातज्ञानस्य कर्मनिषेधेन कर्मणां ज्ञानार्थत्वावगमात् । कर्मणां हि ज्ञानवत्साक्षान्मोक्षहेतुत्वे जातेऽपि ज्ञाने तानि कर्तव्यानि स्युः । ज्ञानद्वारा तु साधनत्वे द्वारस्य निष्पन्नतया तदर्थानि कर्माणि न कर्तव्यानीति तन्निषेध उपपद्यते । कर्मणां दृष्टज्ञानद्वारकत्वसम्भवेऽदृष्टद्वारकत्वकल्पनस्यायुक्तत्वाच्च । "ज्ञानं प्रधानं" इत्यादिवचनमप्युक्तनिषेधपर्यालोचनया ज्ञानं प्रधानं, साक्षात्कारणम् । तत्तु कर्मणा स्वजनकेन विहीनं चेत् स्वस्यैवानिष्पत्त्या कार्याजनकम् । तथा कर्म प्रधानं, ज्ञानोत्पादकतया अवश्यापेक्षणीयम् । अत एव द्वारभूतया बुद्ध्या विनाकृतं न जनकम् । अत उभयोः सत्त्व एव मुक्तिर्भवतीति द्वारद्वारिभावसमुच्चयपरतया योजनीयम् । कर्मणां ज्ञानजनकत्वे—

वेदानुवचनेनापि यज्ञेनाध्ययनेन च ।
दानेन तपसा देवास्तथैवानशनेन च ॥
वेत्तुमिच्छति यो विद्वान् स मुनिर्नेतरो जनः ।

इति स्कान्दवचनं मानम् । न च वेदानुवचनादेस्तृतीयान्तस्य प्राधान्येन इच्छतीत्यनेनान्वयादिच्छासाधनत्वमेव । न ज्ञानसाधनत्वमिति युक्तम् । अश्वेन गन्तुमिच्छतीत्यत्र शब्दतोऽप्रधानेऽपि गमनेऽर्थतः

प्राधान्यादश्वस्येव वेदानुवचनादेः "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" (ब्र. सू. ३-४-२६) इति न्यायेन वेदने सम्बन्धात्। शब्दतः प्राधान्याश्रयणेऽपि तादृशेच्छाद्वारा वेदनसम्बन्धाद्वा लौकिकव्युत्पत्त्याश्रयणेऽपि कर्मणां वेदनसाधनत्वलाभात्। वस्तुतस्तु मीमांसाशास्त्रीयव्युत्पत्त्याश्रयणे तु इच्छतीति पञ्चमलकारस्य वेदानुवचनादिसम्बन्धे विविदिषुं प्रति वेदानुवचनादि विहितमिति कर्मणां वेदनसाधनत्वमस्माद्वाक्यात्प्रतीयत एव। अथवा "यस्यैते चत्वारिंशत्संस्काराः" इति वाक्यं कर्मणां ज्ञानसाधनत्वे मानम्। संस्कारा हि प्रोक्षणादिजनितसंस्कारवत्स्वतः फलकरणत्वाभावादुपकार्यं फलकरणमपेक्षन्ते। प्रकृते शिवसायुज्यरूपफलकरणं ज्ञानमेव। "ज्ञानादेव तु कैवल्यमित्याह परमा श्रुतिः" इत्यादिना तस्य फलकरणत्वेनोपस्थितत्वात्। उपस्थितपरित्यागेनानुपस्थितकल्पने गौरवात्। तस्माच्चत्वारिंशत्संस्कारोपकृतेन ज्ञानेन शिवसायुज्यं भवतीत्येवमर्थकतया संस्कारवाक्यं भवति कर्मणां ज्ञानसाधनत्वे मानम्। तथा यागादीन्यपि कर्माणि "ज्ञानोत्पत्तिनिमित्तं तु क्रिया चर्या प्रकीर्तिता" इति वचनाज्ज्ञानजनकान्येव। एवं काशीमरणादिकमपि ज्ञानद्वारैव मोक्षसाधनम्। मलस्य ज्ञानमात्रनिवर्त्यत्वेन तेन विना मुक्तेरसम्भवात्। अत एव स्कान्दे—

श्रीमद्वाराणसी पुण्या पुरी नित्यं मम प्रिया।
यस्यामुत्क्रममाणस्य प्राणैर्जन्तोः कृपाबलात्॥
तारकं ब्रह्मविज्ञानं ददामि श्रेयसे हरे।

इति तस्य ज्ञानसाधनत्वं प्रतिपादितम्। न च तत्र कथं साञ्चितकर्मणां निवृत्तिरिति युक्तम्। ज्ञानेन शिवकृतया दीक्षया वा तेषां निवृत्त्युपपत्तेः। तस्मात् कर्माणि ज्ञानद्वारैव मुक्तिसाधनानि। तेन वैदिका-

न्यागमिकानि च कर्माणि ज्ञानार्थिना कर्तव्यानि। न केवलं वेदागमयोर्विहितान्येव कर्माणि ज्ञानजनकानि; अपि तु यानि तत्राविहितानि प्रतिषिद्धानि पातकानि तान्यपि शिवाराधनत्वेन कृतानि ज्ञानजनकानि। स्कान्दे—

यानि लोके निषिद्धानि कर्माण्यविहितानि च।
तानि शंभोः परा पूजेत्येतज्ज्ञानं महामखम्॥
यानि कर्माणि सर्वाणि निषिद्धानि श्रुतौ स्मृतौ।
तानि चाराधनं शंभोरिति ज्ञानं महामखम्॥
ईश्वरार्थधिया पापान्यपि कर्माणि सुव्रताः।
भवन्ति पूतान्यत्यन्तं सत्यमेव न संशयः॥
आर्द्रं काष्ठं महानग्निः शुष्कं कृत्वा दहेद्यथा।
तथेश्वरधिया पापं विशुद्धं ज्ञानदं भवेत्॥
वैदिकं तान्त्रिकं हित्वा मार्गं स्वप्रज्ञया द्विजाः।
सोऽपि यज्ञ इति प्रोक्तो मया वेदार्थवित्तमाः॥
श्रद्धया सहितं सर्वं श्रेयसे भूयसे भवेत्॥

इत्यादिना तथा प्रतिपादनात्। अयं च प्रपन्नधर्मः। अप्रपन्नस्य तु वर्णाश्रमधर्मा एवानुष्ठेयाः। एवं पुत्रकधर्माननुतिष्ठतो यदा दैववशेन निर्वाणदीक्षाया असम्भवस्तदा सामीप्यफलमनुभूयान्ते जन्मान्तरे मुक्तिर्भवति। यदा तु तीव्रतरशक्तिनिपातयोरन्यतरलाभेन निर्वाणदीक्षां लभते तदा तया सञ्चितकर्मणां निवृत्त्या तत्त्वज्ञानप्रतिबन्धकदुरितविगमेन तत्त्वज्ञानार्थं श्रवणादिकं कुर्यात्।

शुद्धशैवमिदं तन्त्रं न देयं न प्रकाशयेत्।
दीक्षितस्य च धीरस्य शिवभक्तिपरस्य च॥
श्रावणीयं न चान्यत्र कथनं हि प्रशस्यते।

इति श्रवणाधिकारत्वेन प्रतिपादिताया दीक्षाया निष्पादात्। यद्य-प्यधीतागमस्य पदपदार्थव्युत्पत्तिमात्रेणार्थज्ञानं भवति। तथापि तात्पर्यापरिज्ञाने आपाततः पूर्वापरविरोधप्रतिसन्धानेन सन्देहादि-कलुषितमेव स्यादित्यकलुषितप्रतिपत्तये तात्पर्यपरिज्ञानरूपं श्रवण-मादरणीयम्। एतच्च—

यावत्कालं शिवज्ञानं दृढीभवति तस्य तु।
तावत्कालं च कर्तव्यं श्रवणादि विशेषतः॥

इत्यादिना विहितम्। यद्यपि तात्पर्यज्ञानं वाक्यार्थज्ञानजनकतया लोकत एव प्राप्तमिति न विधातव्यम्। तथापि निगमागमा-दिविचारेणैवायमर्थो निश्चेतव्यो न भाषाप्रबन्धादिविचारेणेतीतर-व्यवच्छेदाय विधीयते। तथाचावघातादिविधिवदयं नियमविधिः। न च तत्र नियमादृष्टसाध्यं परमापूर्वमस्तीति नियमविधित्वं युक्तम्। इह तु तत्साध्यं नास्तीति न तद्युज्यत इति वाच्यम्। साक्षात्कारस्य तत्साध्यत्वोपपत्तेः। अत एव भगवता बादरायणेन "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" (ब्र. सू. ३-४-२६) इति सर्वा-दृष्टसाध्यत्वं ज्ञानस्याभिहितम्। एवं श्रवणेन जायमानं ज्ञानं च स्वस्य शिवेनाभेदावगाहि। न तु नियन्तृनियम्यभावादिना भेदावगाहि।

अहमात्मा शिवो ह्यन्यः परमात्मेति यः स्मृतः।
एवं यो भावयेन्मोहान्न शिवत्वमवाप्नुयात्॥
शिवोऽन्यस्त्वहमेवान्यः पृथग्भावं विवर्जयेत्।

(सर्व. वि. पा. श्लो. ३९—४०)

इति भेदज्ञाननिषेधपूर्वकं—

यः शिवः सोऽहमेवेति अद्वैतं भावयेत्सदा॥

(सर्व. वि. पा. श्लो. ४०)

इत्यनेन सर्वज्ञानोत्तरवचनेनाभेदज्ञानस्यैव मुक्तिसाधनतया बोधनात्। इदं चाचार्यमूर्तिस्थाद्गुरोः निर्वाणदीक्षापुरस्सरं श्रवणं सकलानाम्। विज्ञानाकलप्रलयाकलयोऽस्तु निरधिकरणस्य शिवस्यानुग्रहमात्रेण दीक्षा तत्त्वज्ञानं च भवतीति वेदितव्यम्। एवं श्रवणे निर्वृत्ते युक्तिभिस्तदर्थस्यानुचिन्तनरूपं मननमयोग्यतानिरासेन श्रवणप्रतिष्ठार्थं कर्तव्यम्। अनन्तरं च श्रुतस्यार्थस्यानुध्यानरूपं निदिध्यासनं विपरीतभावनानिवृत्तये चित्तैकाग्र्याय च करणीयम्। अनादिजन्मानुवृत्ता विपरीतवासना हि न सकृच्छ्रवणमात्रेण निवर्तते। किं तु ध्यानाहितयैव वासनया। न विपरीतवासनायां सत्यां साक्षात्कारः सम्भवति। तथा चित्तैकाग्र्यं विना न सूक्ष्मवस्तुसाक्षात्कारः। केशादिसाक्षात्कारे तथा दर्शनात्। अतो विपरीतवासनानिवृत्तये चित्तैकाग्र्याय च निदिध्यासनं कर्तव्यम्। श्रवणादिकं च यदा साक्षात्काराय न पर्याप्तं तदा अर्चिरादिद्वारा फलभोगाननुभूय प्रलयसमये शिवानुग्रहे सति तत्र तदैव मुक्तिः। तदा शिवानुग्रहाभावे गुरुणा जन्मान्तरे मुक्तिः। यदा तु पर्याप्तं तदा गुरुकृपापरिपाकेन सूर्यकान्तस्य स्वान्तर्गतोऽग्निः सूर्यकिरणसन्निधानेनेव स्वात्मज्ञानमभिव्यज्यते। अयमेव साक्षात्कारोदयः। फलसाधनमपि ॥

नन्वाच्छादके मले सति कथमभिव्यक्तिः। न च मलनिवृत्त्यनन्तरमभिव्यक्तिरस्त्विति वक्तुं युक्तम्। अभिव्यक्तिसाध्यत्वेन मलनिवृत्तेस्त्वया स्वीकारात्। तस्मादभिव्यक्तिमलनिवृत्त्योः परस्पराश्रयपरिहाराय मलस्य दीक्षानिवर्त्यत्वमेवाभ्युपगन्तव्यम्। युक्तश्चैतत्। मलस्य द्रव्यत्वेन काचादिदोषस्य चिकित्साव्यापारेणेव शिवव्यापारेणैव निवर्तनीयत्वात्। न चाज्ञानत्वेन मलस्य ज्ञानमात्रनिवर्त्यत्वं युक्तम्। अज्ञानशब्दस्य भ्रान्तिवाचकत्वे वा मलस्य

भ्रान्तित्वाभावेन पक्षधर्मत्वाभावात् । एवं ज्ञानाभाववाचकत्वेऽप्य-पक्षधर्मत्वमेव । भ्रान्तिहेतुद्रव्यवाचकत्वे तादृशक्रियानिवर्त्यत्वस्यैव दर्शनेन विरोधात् । आणववाचकत्वे तस्यैव पक्षतया सहचारग्रह-स्थलाभावात् । तस्मात् साक्षात्कारः फलमेव ; न साधनम् । नचैवं फलस्याविधेयतया साक्षात्कारस्य विधेयत्वमनुपपन्नं स्यादिति वाच्यम् । इष्टापत्तेः । श्रूयमाणो विधिस्तु यथा साक्षात्कारो निष्पद्यते तथा यतितव्यमित्येवमर्थकतया योजनीयः । तस्माद्दीक्षैव साधनम् । अत एव—

दीक्षैवं मोचयत्यूर्ध्वं परं धाम नयत्यपि ।

इत्यादिकं वचनमपि सङ्गच्छते । तस्मान्न साक्षात्कारः फलसाधन-मिति नैवम् --

ज्ञानेन हि तदज्ञानं निवर्त्येत न कर्मभिः ।

इत्यादिना अज्ञानस्य ज्ञाननिवर्त्यताविधानपूर्वकं कर्मनिवर्त्यता-निषेधात् । अप्रकाशरूपस्य मलस्य प्रकाशेनैव निवर्तनीयत्वाच्च । अप्रकाशरूपस्य तमसः आलोकादिना प्रकाशेन निवृत्तिरनुभूयत इति न सहचारग्रहस्थलस्याभावः । न च द्रव्यत्वेन कर्मनि-वर्त्यत्वं ज्ञानानिवर्त्यत्वं वा अनुमातुं शक्यते । अज्ञानान्यत्व-स्योपाधित्वे पक्षेतरत्वस्याप्युपाधित्वापत्तेरिति वाच्यम् । आगमबाधि-तत्वात् । न चाभिव्यक्तिमलनिवृत्त्योः परस्पराश्रयत्वम् । तमोनिवृत्ति-प्रकाशयोरिव तदभावोपपत्तेः । तत्रापि हि सति तमसि न प्रकाशोदय इति तमोनिवृत्तिः प्रकाशोदये अपेक्षिता । प्रकाशोदयश्च तमोनिवृत्ता-विति प्रसक्तः परस्पराश्रयः । स च—सत्येव तमसि उदितेन प्रकाशेन निवर्तते तमः ; तमःप्रकाशयोरपि क्षणमात्रमस्त्येव सहावस्थानमिति वा, एककालीनेनापि प्रकाशेन तमोनिवृत्तिर्जायते ; जनकत्वं न पूर्वभावित्वम् ; किं तु शक्तत्वमिति वा परिहार्यः । तद्वदेवात्रापि

परिहारः सम्भवतीति न काप्यनुपपत्तिः । "दीक्षैव मोचयती"त्यपि वचनं दीक्षाया आवश्यकत्वमात्रपरम् । न तु ज्ञानव्यवच्छेदपरमिति न तद्विरोधोऽपि । तस्मात्साक्षात्कारेणैव मलनिवृत्तिः । अभिव्यक्तं स्वरूपज्ञानमेव साक्षात्कारः । न तु बुद्धिवृत्त्यादिरूपः । तस्य चेतने अप्रवृत्तेः । कारणाभावाच्च । न च शब्द एव कारणम् । तस्य परोक्षज्ञानजनकत्वस्वभावत्वेनापरोक्षज्ञानजनने सामर्थ्याभावात् न चापरोक्षत्वादौ करणस्वभावो न प्रयोजकः । अपि तु विषयस्वभाव इति वाच्यम् । पुरोवर्तिनि घटे "अयं घटः" इत्यादिवाक्येनापरोक्षज्ञानजननप्रसङ्गात् । न चेष्टापत्तिः । निमीलिताक्षं प्रति तस्य परोक्षज्ञानजनकतयेव सर्वसम्मतत्वात् । यस्यापि तत्रेन्द्रियसन्निकर्षोऽस्ति तम निमीलिताक्षं प्रत्यपि तस्य परोक्षज्ञानजनकत्वमेव । विषयस्वभावस्यापरोक्षं प्रति प्रयोजकत्वेऽन्यस्यापि तदुत्पत्त्यापत्तेः । दशमस्त्वमसीत्यत्रापि शब्दात् परोक्षज्ञानानन्तरं ऐन्द्रियिकमेवापरोक्षज्ञानं जायते । न चैन्द्रियिके ज्ञाने शब्दापेक्षा किमर्थेति युक्तम् । दशत्वसंख्यापूरकतया स्वगतैकत्वस्यापेक्षाबुद्धावभानादशमस्त्वमसीतिवाक्येन स्वगतमप्येकत्वं संख्यापूरकमिति ज्ञापिते युक्तस्तत्साक्षात्कारः । अत एव स्वात्मगतैकत्वस्य तत्संख्यापूरकत्वाभिज्ञं प्रति न तद्वाक्यमुपयुज्यते । तस्माच्छब्दस्य न साक्षात्कारजनकत्वम् । एवमभिव्यक्तस्वरूपज्ञानतया साक्षात्कारान्मुक्तो जीवन्मुक्त इत्युच्यते । अस्य च करणीयं कर्म किमपि नास्ति । तथापि ज्ञानोत्पत्तेः प्राङ्निरन्तरकर्मानुष्ठानवासनाबलात् प्रारब्धनाशाय लोकसंरक्षणाय च कर्मानुष्ठाने प्रवर्तते । न च कर्मभिर्जनितेन पुण्येन सम्बध्यते । न च कर्मणः पुण्यजननसमर्थस्य कथं तदजनकत्वमिति वाच्यम् । अग्निस्तम्भाभिज्ञं प्रति अग्नेरदाहकत्ववदत्र तत्त्वज्ञानिनं प्रति कर्मणोऽप्यजनकत्वस्योपपत्तेः । एवं प्रारब्धभोगार्थं निषिद्धानुष्ठानेऽपि

अधर्मस्यानुत्पत्तिरुपपन्ना। कर्मणस्तज्जनकताबोधको निगमागमादिरपि प्रमाणम् । तस्य तत्त्वज्ञानरूपप्रतिबन्धकाभावसहकृतं कर्म तज्जनकमित्येवम्परत्वात् । विहितस्य निषिद्धस्य च सुहृद्दुर्हृदोः धर्माधर्मजनकत्वस्य सद्भावाच्च । कर्मकर्तृगतपुण्यापुण्यजनकत्वप्रतिपादकवचनस्य सामान्यविषयस्य विशेषविषयेण तत्त्वज्ञानिना कृतं कर्म तस्य सुहृदि दुर्हृदि वा पुण्यादिकं जनयतीत्येतदर्थप्रतिपादकेन वेदवचनेन सङ्कोचोपपत्तेः ॥

नन्वस्य तत्त्वज्ञानोत्पत्त्यनन्तरमेव सर्वाणि कर्माणि नश्यन्ति ।

यथा वह्निर्महादीप्तः काष्ठमात्रं च निर्दहेत् ।
तथा शुभाशुभं कर्म ज्ञानाग्निर्दहति क्षणात् ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।

(भगवद्गीता-अ. ४ श्लो. ३७)

इत्यादिवचनात् । एवं च कर्मणोऽभावाद्भोगोऽपि न सम्भवतीति न तदर्थस्य देहस्यावस्थानं युज्यते । अस्तु वा प्रारब्धकर्मणोऽवस्थानम् । तथापि निवृत्तमलस्यानावृतज्ञानतया कथं वैषयिकसुखदुःखादिभोगः । तस्य रागादिसाध्यत्वात् । निर्मलस्य च रागाद्यभावात् । तस्मात्तत्त्वज्ञानिनो देहावस्थानमयुक्तमिति जीवन्मुक्तिरनुपपन्नेति । मैवम् । "प्रारब्धं भोगतो नश्येच्छेषं ज्ञानेन दह्यते" इत्यादिवचनानुसारेण "यथा वह्नि" रित्यादेः प्रारब्धेतरविषयकत्वं कल्पनीयमित्यतोऽस्त्येव प्रारब्धकर्मणोऽवस्थानम् । तेन तदधीनस्य भोगस्योत्पादनाय देहस्यावस्थानमपेक्षितमेव । न च निर्मलस्य कथं रागाद्यधीनो भोग इत्यपि युक्तम् । रागाद्यभावेऽपि प्रारब्धविनाशाभिसन्धिना भोगोपपत्तेः । अथवा रागादिवासनया भोगः । अत एव प्रारब्धकर्मणोऽपि विनाशे तया वासनयैव भोग उपपद्यते ॥

केचित्तु—

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।

(वासिष्ठलैङ्गे अ. १० श्लो. ३३)

इत्यादिवचनात् सर्वमपि कर्म भोगनाश्यम् । "ज्ञानाग्नि" रित्यादिकमपि उक्तवचनाविरोधाय कायव्यूहपरिग्रहपूर्वकभोगोत्पादनद्वारकविनाशपरमेवेति वदन्ति । तन्न युक्तम् । सर्वस्यापि भोगनाश्यत्वे प्रारब्धाप्रारब्धयोर्विशेषाभावेन—

प्रारब्धं भोगतो नश्येच्छेषं ज्ञानेन दह्यते ।

इत्यादिवचनव्याकोपप्रसङ्गात् । नाभुक्तमित्यादिवचनमपि अनेनैव वचनेन प्रारब्धविषयतया निवेदितमिति न तद्विरोधोऽपि । जीवन्मुक्तलक्षणं तु मायिकदेहादियुक्तत्वे सति निर्मलत्वम् । निर्मलत्वञ्च न मलध्वंसवत्त्वम् । मलस्यैकत्वेनैकमुक्तौ सर्वमुक्तिप्रसङ्गात् । किं तु मलसंयोगध्वंसवत्त्वम् । संयोगस्तु प्रतिपुरुषं भिद्यत इति एकस्य विनाशेऽप्यन्यस्याविनाशान्नोक्तदोषः ॥

अन्ये तु—तत्तदावरणशक्तीनां विभेदेनोक्तदोषं परिहरन्ति । अस्य च जीवन्मुक्तस्य हासक्रन्दनवल्गनादीनि चिह्नानि । यद्यप्येतान्युन्मत्तादिसाधारणानि । तथापि उन्मादादिहेतुकेभ्यस्तेभ्यो विलक्षणानि तत्त्वज्ञानकारुण्यादिजनितान्येतानि चिह्नानि । तथा हि—तत्र शिवशास्त्रोक्तमार्गे विद्यमाने पशुशास्त्रोक्तमार्गमाचरन्त्यज्ञानतो जनाः । अहो ! प्रत्यक्षेऽपि विषये इत्थं मोहो जात इति ज्ञानं हासजनकम् । अल्पस्य वैषयिकसुखस्याभिलाषेण महद्दुःखमनुभवत्ययं जनः । कथमेतन्निराकरणीयमिति कारुण्यं क्रन्दजनकम् । स्वात्मनः संसारसमुद्रादुत्तीर्णताज्ञानं वल्गनहेतुः । तदुक्तं तत्त्वसारे—

धृतिधैर्यसमायुक्तः सदानन्दसमावृत. ।
हसते नृत्यते चैव क्रन्दते वल्गतेऽपि च ॥

कार्तिकेय उवाच—

हसनादि त्वया प्रोक्तं योगीन्द्राणां च चेष्टितम् ।
तस्यार्थं नैव जानामि किमर्थं कुर्वते प्रभो ॥

ईश्वर उवाच—

सुव्यक्तं दूषयित्वा तु विमार्गेण जनो रतः ।
तं दृष्ट्वा हसते योगी अहो! व्यामोहितं जगत् ॥
ज्ञात्वा भवस्यासद्भावं क्रीडन्ते भवमध्यतः ।
क्रीडन्तोऽपि न लिप्यन्ते तेन नृत्यन्ति योगिनः ॥
रसलुब्धो यथा मत्स्यो लोहशङ्कं न पश्यति ।
सुखलुब्धस्तथा लोको यमलोकं न पश्यति ॥
तत्त्वहीनो महद्दुःखं सहतेऽतीव दारुणम् ।
तेनासौ क्रन्दते योगी दृष्ट्वा दुःखं जनस्य च ॥
अपारस्य समुद्रस्य पारं हि तरितं मया ।
इति मत्वा च गर्वित्वा वल्गन्ते तेन योगिनः ॥ इति ॥

इत्थमेवागमान्तरोक्तानि चिह्नान्तराणि ज्ञेयानि । एतैश्च चिह्नैः जीवन्मुक्तं विनिश्चित्य तस्मिन् परां प्रीतिं कुर्यात् । न कदाचिदपि द्वेषम् । यतो द्वेषे कृते तदीयनिषिद्धकर्मभिः स्वस्मिन् पापं जायेत । ईदृशे च जीवन्मुक्ते स्वरूपसाक्षात्कारेण निवृत्तावरणतया शिवानन्दः प्रकाशते। तथापि वैषयिकसुखदुःखादिकमपि विक्षेपवशाज्जायेत। अतः परममुक्तिरेव परमः पुरुषार्थः। तस्याश्च परममुक्तेः स्वरूपं वादिनः स्वस्वमत्यनुसारेणान्यथान्यथा वदन्ति। तथाहि—चार्वाकास्तावत्—देहस्यैव दुःखनिदानत्वात् तद्विनाशे दुःखानुत्पत्तेः सकलदुःखनिदानभूतदेहरूपात्मनाश एव मोक्ष इत्याहुः। तन्न। अपुरुषार्थत्वात्। यद्यपि मोक्षदशायां दुःखमूलस्य विनाशः सर्ववादिसम्मतः। तथापि स स्वयं न पुरुषार्थो भवितुमर्हति। न हि सर्पकण्ट-

कादिनिवृत्तिरेव पुरुषार्थः। दुःखाभाव एव पुरुषार्थ इति चेत् स किं दुःखध्वंसः? उत दुःखप्रागभावः? नाद्यः। तदानीं दुःखस्यानुत्पत्तौ तद्ध्वंसाभावात्। उत्पत्तौ च तज्ज्ञानादेव नाश इति पुरुषप्रवृत्तिवैफल्यात्। न द्वितीयः। दुःखप्रागभावस्यानादेः साध्यत्वाभावेन पुरुषार्थत्वायोगात्। अस्तु तर्हि दुःखनिदाननाश एव पुरुषार्थ इति चेत्; न। पूर्वोक्तदोषात्। देहरूपस्यात्मनो भोक्तुः मुक्तिदशायामभावेनाभुज्यमानत्वेनापुरुषार्थत्वाच्च। "नावेद्यः पुरुषार्थः" इति न्यायात्। पुरुषार्थो हि तत्प्रेप्सुना भुज्यमानः सन्नेव पुरुषार्थः। न च स्वात्मनाशः स्वेन भुज्यते। देहस्य दुःखनिदानत्ववत् सुखनिदानत्वस्यापि सद्भावेन तन्नाशस्योद्देश्यत्वायोगाच्च। शरीरात्मवादश्च पूर्वमेव निरस्तः। एतेन ज्ञानसन्ततिविच्छेदो मोक्ष इति माध्यमिकपक्षोऽपि निरस्तः। ज्ञाननाशस्यानुद्देश्यत्वाच्च। ज्ञानक्षणिकत्ववादश्च पूर्वमेव निरस्तः। विषयोपरागाभावेन निरुपप्लवा ज्ञानसन्ततिर्मोक्ष इति योगाचारमतमप्ययुक्तम्। ज्ञानहेतोः शरीरादेरभावात्। न च विषयावच्छिन्नज्ञान एव शरीरस्य हेतुता। लाघवेन ज्ञानमात्र एव तस्य हेतुत्वात्॥

साङ्ख्यास्तु—प्रकृतिपुरुषविवेकख्यातौ प्रकृतिकार्यमहदाद्यनुपधानेनावस्थानरूपं कैवल्यं मोक्षमाचक्षते। तथा हि—पुरुषस्य भोगनिमित्तं प्रकृतिर्महदादिसृष्टौ प्रवर्तते। निर्लेपस्य च पुरुषस्य स्वतो भोगासम्भवाद्भोक्तृभूतबुद्ध्यविवेकादेव भोगो वाच्यः। बुद्ध्या च पुरुषस्य विवेकोदयेऽविवेककृतभोगासम्भवेन प्रकृतौ महदादिकार्यानिष्पत्तेस्तदुपधानविरहेणैवावस्थानरूपं कैवल्यं सम्भवतीति तदयुक्तम्। चैतन्यप्रकाशविरहेण पाषाणताकल्पेऽस्मिन् कैवल्ये सदाशिवादितत्तद्भुवनभोगपरित्यागेन लिप्साया अनुदयात्। सांसारिकदुःखासंस्पृष्टं निरतिशयं सुखं यदि मुक्तौ स्यात्तदा तत्रेच्छा स्यात्।

सकलभोगाविरोधिकैवल्यमात्रे तु न कस्यापीच्छा उदेतुमर्हति। तस्मान्न कैवल्यं पुरुषार्थः। एतेनात्यन्तिको दुःखोच्छेदो मोक्ष इति नैयायिकमतमप्यपास्तम्। तन्मते मुक्तिदशायामात्मनो विशेषगुणशून्यत्वेन दुःखाभावस्याज्ञायमानत्वेनापुरुषार्थत्वात् ॥

ननु दुःखाभावस्य स्वरूपेण पुरुषार्थत्वम्, न तु ज्ञायमानतया। न हि "दुःखाभावं जानीया" मित्युद्दिश्य प्रवृत्तिः। अपि तु "दुखं मे मा भूत्" "दुःखं मे इदानीं जायमानं नश्यतु" इत्येवम्। सुखादावपि स्वरूपेणैव पुरुषार्थत्वम्। ज्ञानं तु नान्तरीयकमेवेति चेन्न। अज्ञायमानस्य दुःखाभावस्य मूर्छादिसाधारण्येनापुरुषार्थत्वात्। तदुक्तम्—

दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते।
नहि मूच्र्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः ॥ इति ॥

एतेनात्यन्तिको दुःखसाधनध्वंसो मोक्ष इति नैयायिकैकदेशिमतं चापास्तम् ॥

भाट्टास्तु—नित्यसुखाभिव्यक्तिर्मुक्तिरित्याहुः। तदपि न। अभिव्यक्तिर्जन्या अजन्या वा? आद्येऽपि अभिव्यक्तिरावरणनिवृत्तिर्वा? ज्ञानं वा? आवरणनिवृत्तिरिति चेत् तस्यास्मन्मतत्वेन तवापसिद्धान्तात्। ज्ञानमिति चेत् "यत्कृतकं तदनित्यम्" इति न्यायेन तस्य विनाशित्वेन मुक्तेरनित्यत्वप्रसङ्गात्। अभिव्यक्तेरजन्यत्वे पुरुषासाध्यत्वेन पुरुषार्थत्वायोगात् ॥

आर्हतास्तु—आत्मनः सततोर्ध्वगमनमेव मोक्षः। तस्योर्ध्वगमनं च बन्धविगमेन भवति। संसारदशायामधोगमनं च स्वतो लघोरपि कर्मबन्धनेनालघुभूतस्य तस्य लोहपञ्जरान्तः स्थितस्यालाबुकस्य जले क्षिप्तस्येव युक्तम्। ऊर्ध्वगमनमपि कर्मबन्धविगमेन लोहपञ्जरविच्छेदेनालाबुकस्येव युक्तमेवेत्याहुः। तदप्ययुक्तम्।

आत्मनोऽणुमध्यमपरिमाणयोर्निरस्तत्वेन व्यापकस्य गमनासम्भवात् । ऊर्ध्वगमनस्य सुखदुःखाभावेतरत्वेनापुरुषार्थत्वाच्च ॥

रुद्रविष्ण्विन्द्रादिपदप्राप्तिर्मुक्तिरित्यपि न युक्तम् । तस्य विनाशित्वात् । तन्मुक्तित्वप्रतिपादकपुराणादिवचनानामपि गौण-मुक्तिपरत्वात् ॥

केचित्तु सत्त्वभुक्तिरेव मुक्तिरित्याहुः। तथा हि-पुरुषस्य प्रकृति-भोक्तृत्वमनादि । सादित्वे ततः पूर्वं पुरुषस्यापि सत्त्वे मानाभावेन तस्यापि सादित्वप्रसङ्गात । न चानादेर्निवृत्तिः कल्पयितुं युक्ता । पुरुषस्यापि निवृत्त्यापत्तेः । ततो मुक्तिदशायामप्यस्यैव भोक्तृत्वम् । इयांस्तु भेदः । यत् संसारदशायां कर्मवशेन दुःखमोहान्तरितसुख-रूपा प्रकृतिर्भोग्या । मुक्तौ कर्मणामभावान्निरतिशयानन्दात्मक-सत्त्वरूपा प्रकृतिर्भोग्येति । एतदपि भोगजन्यत्वाजन्यत्वविकल्पेन भाट्टमतनिरासेनैव निरस्तम् ।

शिवसाम्यमपि न मोक्षः । तच्च साम्यं उत्पत्तिसङ्क्रान्ति-समावेशाभिव्यक्तिभिश्चतुर्धा सम्भवति । तत्र महाव्रतिनः उत्पत्त्या साम्यमुपगच्छन्ति । तथा हि—मुक्तौ तावच्छिवसाम्यमस्ति । तच्च सर्वज्ञत्वादिरूपम् । तच्च तदैवोत्पद्यते। अन्यथा पूर्वमपि तत्प्रसङ्गात् । तस्माच्छिवगुणसदृशगुणोत्पत्त्यैव शिवसाम्यमिति ॥

पाशुपताः सङ्क्रान्त्या साम्यमुपगच्छन्ति । तथा हि—कस्तूरिकाद्यामोदः पटादाविवेश्वरस्थं सार्वज्ञ्यादिकं मुक्तपुरुषे सङ्क्रामति । तस्माच्छिवगुणसङ्क्रान्त्या साम्यमिति ॥

कापालिकाः समावेशेन साम्यमुपगच्छन्ति । तथा हि—यथा ग्रहाः पुरुषेष्वाविशन्ति तथेश्वरगुणा मुक्तेष्वाविशन्ति । तस्मा-च्छिवगुणसमावेशेन साम्यमिति ॥

शैवैकदेशिनः अभिव्यक्त्या साम्यमुपगच्छन्ति। तथा हि—शिवस्येव जीवानामपि सार्वज्ञ्यादिकं पूर्वमेवास्ति । किन्तु संसारदशायां मलरुद्धं न प्रकाशते । मुक्तौ तु मलविगमेनाभिव्यज्यते । तस्मात् स्वीयगुणाभिव्यक्त्या शिवसाम्यमिति ॥

तत्र उत्पत्तिसाम्यपक्षस्तावदयुक्तः । मुक्तौ ज्ञानोत्पादकशरीराद्यभावान्न तावत्सार्वज्ञ्यस्योत्पत्तिः सम्भवति । तस्योत्पत्तिमत्त्वेऽनित्यत्वप्रसङ्गात् स्वर्गादिभ्यो मुक्तेरविशेषप्रङ्गाच्च । सङ्क्रान्तिसाम्यपक्षोऽप्ययुक्तः । तथा हि—किं स्वाश्रयपरित्यागेनाश्रयान्तरप्राप्तिः सङ्क्रमः ? उत तदपरित्यागेन ? नाद्यः । ईश्वरज्ञानस्य मुक्ते सङ्क्रान्त्यभ्युपगमे ईश्वरस्य ज्ञानाभावप्रसङ्गात् । नापि द्वितीयः । ज्ञानस्य निरंशत्वेनांशेन सङ्क्रमस्यायोगात् । तथा विज्ञानसद्भावे मानाभावाच्च । शिवज्ञानं नान्यत्र सङ्क्रमते, गुणत्वादित्यनुमानेन मङ्क्रान्त्यभावसाधनाच्च । न चाप्रयोजकत्वम् । गुणिपरित्यागेन गुणस्यान्यत्र गमने गुणितादात्म्यभङ्गप्रसङ्गेन गुणत्वस्यैवायुक्तत्वात् । तदुक्तम्—

त्यक्त्वा स्वगुणिनं यान्ति न च गुण्यन्तरं गुणाः ।
गच्छतां च व्यवस्थेयं पदार्थानां विरुध्यते ॥ इति ।

ननु—

निन्दनाद्द्विजसाधूनां पापानामथ सेवनात् ।
पापं सङ्क्रमते पुंसां स्वपुण्यमपयाति च ॥
क्षमावति त्वनाक्रोशात् पुण्यवाद्भिः सह स्थितेः ।
पूण्यं सङ्क्रमते पूंसां पापं याति ततोऽन्यतः ॥

इति स्मृत्यादौ पुण्यपापादेः सङ्क्रमणं प्रतिपाद्यते । तथा आचार्यनिष्ठज्ञानस्य शिष्ये सङ्क्रमणं श्रूयते स्वायम्भुवादौ आचार्याभिषेके—

अद्य संक्रमितो योऽयमधिकारो मया त्वयि ।

स कर्तव्यस्त्वया तावद्यावत्सङ्क्रामितोऽन्यतः ॥ इति ॥

एवञ्च पूर्वोक्तगुणत्वहेतोर्व्यभिचार इति चेन्न। स्मृत्यादौ पुण्यपापयोः सङ्क्रान्तिप्रतिपादकवचनस्य तज्जातीयोत्पत्तिपरत्वात्। ज्ञानसङ्क्रान्तिप्रतिपादकवचनस्यापि गुरुनियोगेन गुरुवद्व्याख्यानादौ स्वातन्त्र्यप्रतिपादनपरत्वात्। तथा च तत्र न मुख्या सङ्क्रान्तिः। न च कस्तूरिकामोदादेः पटे सङ्क्रान्तिदर्शनाद्व्यभिचारः। तत्रापि कस्तूरिकावयवानामेव सङ्क्रान्तेः। तत्र च गुणत्वाभावेन हेतोरभावात्। न च वह्निगतस्यौष्ण्यस्य जले सङ्क्रान्तिर्दृश्यते। अन्यथा जलसम्बन्धे करादौ दाहो न स्यादिति व्यभिचार इति वाच्यम्। तत्रापि जलस्थस्यानुद्भूतरूपवह्नेरेव दाहकत्वात्। तथा च न गुणस्य स्वाश्रयादन्यत्र सङ्क्रम इति सिद्धम्। तस्मात्सङ्क्रान्तिसाम्यपक्षोऽयुक्त एव ॥

नाप्यावेशसाम्यम्। तथा सति भूताविष्टस्येवास्वातन्त्र्यापत्त्या पुरुषार्थत्वायोगात् ॥

अभिव्यक्तिसाम्यपक्षोऽप्ययुक्तः। ज्ञानक्रियाभिव्यक्त्यात्मनस्तस्य सुखदुःखाभावेतरत्वेन स्वतः पुरुषार्थत्वायोगात्। न च तत्कालीनो दुःखाभावः पुरुषार्थः। तस्य त्वया मोक्षत्वेनानङ्गीकारात्। ज्ञानक्रियाभिव्यक्तेरेव साम्यपदाभिधेयायास्तथात्वेनाभ्युपगमात्। विविधतत्त्वभुवनभोगहानेन तुल्यायव्ययतया तस्य पुरुषार्थत्वायोगाच्च। शिवाद्भिन्नस्य शिवसमस्य मुक्तस्य पारतन्त्र्यनिवृत्तौ शिवस्य सर्वेश्वरत्वविघातापत्तेश्च। मुक्तानां पारतन्त्र्यनिवृत्तौ जगत्कारणशक्तिमत्त्वेन स्वयमपि जगन्निर्माणप्रसङ्गाच्च। किं च मुक्तस्य शिवस्य च भेदकाभावाद्भेदो न युक्तः। शिवसाम्यस्य मुक्तित्वे एकदेशेन साम्यं वा सर्वात्मना साम्यं वा मुक्तिः? आद्ये

बद्धानामपि यत्किञ्चित्साम्यसत्त्वेन बद्धमुक्ताविशेषप्रसङ्गः। द्वितीयेऽपि मुक्तस्य सावयवत्वाभावे निरवयवस्य सार्वज्ञ्यादिगुणवतः स्वतन्त्रस्य च मुक्तस्य तादृशस्य शिवस्य च भेदकाभावेन मुक्तः शिव एव स्यात्। न शिवसमः। मुक्तस्य सावयवत्वाङ्गीकारे सावयवत्वं बैन्दवादिशरीरयोगित्वमेव वाच्यम्। अन्यादृशस्य तस्यासम्भवात्। तथा च मुक्तस्य बद्धस्य चाविशेषप्रसङ्गः। किं च सर्वथा साम्यस्याभेद एव पर्यवसानम्। तस्मान्न शिवसाम्यं मुक्तिः। किं च शिवैकीभावेन शिवानन्दानुभव एव मोक्षः। तथैव स्वस्मिन् परमशिवाभेदज्ञानस्य मोक्षहेतुत्वेन श्रीमत्सर्वज्ञानोत्तराद्यागमेषु बोधितत्वात्। तथा हि सर्वज्ञानोत्तरे वचनानि—

योऽसौ सर्वगतो देवः सर्वात्मा सर्वतोमुखः।
सर्वतत्त्वमयोऽचिन्त्यः सर्वस्योपरि संस्थितः॥
सर्वतत्त्वव्यतीतश्च वाङ्मनोनामवर्जितः।
सोऽहमेवमुपासीत निर्विकल्पेन चेतसा॥
यदेवं निष्फलं ज्ञानं शाश्वतं ध्रुवमव्ययम्।
निर्विकल्पमनिर्देश्यं हेतुदृष्टान्तवर्जितम्॥
अलिङ्गमक्षरं शान्तं विषयातीतगोचरम्।
अविभाव्यमसन्देहं तदहं नात्र संशयः॥
अहमेव परो देवः सर्वमन्त्रमयः शिवः।
सर्वमन्त्रव्यतीतश्च सृष्टिसंहारवर्जितः॥
मया व्याप्तमिदं सर्वं दृश्यादृश्यं चराचरम्।
अहमेव जगन्नाथो मत्तः सर्वं प्रवर्तते॥
अनेकाकारसम्भिन्नं विश्वं भुवनसञ्चयम्।
शिवाद्यवनिपर्यन्तं तत्सर्वं मयि संस्थितम्॥

यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
बहिरन्तर्विभागेन तत्सर्वं व्यापितं मया ॥
अहमात्मा शिवो ह्यन्यः परमात्मेति यः स्मृतः ।
एवं यो भावयेन्मोहान्न शिवत्वमवाप्नुयात् ॥
शिवोऽन्यस्त्वहमप्यन्यः पृथग्भावं विवर्जयेत् ।
यः शिवः सोऽहमेवेति अद्वैतं भावयेत्सदा ॥
अद्वैतभावनायुक्तः सर्वत्रात्मनि संस्थितः ।
सर्वगं सर्वदेहस्थं पश्यते नात्र संशयः ॥
एवमेकात्मभावेन संस्थितस्य तु योगिनः ।
सर्वज्ञत्वं प्रकल्प्येत विकल्परहितस्य च ।
योऽसौ शैवेषु शास्त्रेषु पठ्यते ह्यज ईश्वरः ॥
अकायो निर्गुणो ह्यात्मा सोऽहमस्मि न संशयः ।
अविज्ञातः पशुः सोऽसौ सृष्टिधर्मं समाश्रितः ॥
विज्ञातः शाश्वतः शुद्धः स शिवोऽत्र न संशयः ।
तस्मादात्मा सदा वेद्यः सुविचार्य विचक्षणैः ॥ इति

एतेषां वचनानां गौणार्थतामवलम्ब्य महता प्रयासेन द्वैतपरतया रचितान्येकदेशिनां व्याख्यानान्तराणि न समञ्जसानीति सर्वज्ञानोत्तरव्याख्यानेऽस्माभिः प्रतिपादितम् ॥

ननु सर्वज्ञेन नित्यमुक्तेन शिवेन किञ्चिज्ज्ञस्य बद्धस्य पशोरैक्यं कथं सम्भवति? विरुद्धधर्माणां भिन्नेष्वेव सम्भवात् । अन्यथा पशुशिवयोरभेदे पशुधर्मस्य बन्धस्य शिवे शिवधर्मस्य नित्यमुक्तत्वस्य च पशौ प्रसङ्गः । न चैकस्मिन्नेव बदरीफले कालभेदेन श्यामरक्तरूपयोरिवैकत्रैव सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिविरुद्धधर्मयोः सम्भव इति वाच्यम् । तथा सति शिवस्यैव पशुत्वदशायां बद्धत्वापत्त्या तस्य नित्यमुक्तत्वा-

भ्युपगमविरोधप्रसङ्गात्। अत एव शिवस्य बद्धमुक्तावस्थाप्रसङ्गेन घटे नष्टे घटाकाशस्य महाकाशैक्यमिव मायादिबन्धापगमे जीवस्य शिवैक्यमिति पक्षोऽपि निरस्तः। नदीनां समुद्रे विलयेनैक्यमिव मायादिबन्धविगमे पशूनां शिवे विलयेनैक्यमित्यपि न युक्तम्। लये एकीभावस्य एकीभावे लयस्य चासम्भवात्। लीनस्य मुक्तिरूपपुरुषार्थानुभवायोगाच्च। न च पशूनां लयोक्तिरत्र न स्वरूपलयः; किन्तु पशुत्वावस्थाविलयः। नदीनामपि समुद्रैक्ये नदीभावलय एव; न स्वरूपलय इति वाच्यम्। तथा सति यानि जलानि पूर्वं नदीभावेनावास्थितानि तान्येव प्राक्तनं नदीभावं विहाय समुद्रेणैकीभूतानीत्यनेन किं विवक्षितम्? किं प्राक्तनजलानि प्राक्तनसमुद्रेण मिलित्वा कञ्चिदवयविनमारभन्त इति विवक्षितम्? उत एकजातीयतया संश्लेषः? अथ पूर्वतनभेदलयेनाभेदोत्पत्तिः? आद्ये पक्षे तद्वदेव जीवचैतन्यस्य शिवेन सह मेलनेन कस्यचिदवयविन आरम्भकत्वं स्यात्। न च तथाभ्युपगम्यते। द्वितीयपक्षे शिवजीवयोः संश्लेषसिद्धावपि अभेदासिद्धिः। तृतीयपक्षे भेदस्य नित्यत्वेन नाशायोगः। अभेदस्य च जन्यत्वे विनाशावश्यम्भावेन मुक्तेरनित्यत्वप्रसङ्गः। किं च भेदध्वंसेनाभेदोत्पत्तिपक्षे मुक्तिदशायामेकस्यैव विद्यमानत्वं वाच्यम्। तथा सति मुक्तौ विद्यमानः शिवो वा? जीवो वा? आद्ये शिवस्यैव सत्त्वेन मुक्तिफलभोक्त्रभावप्रसङ्गः। द्वितीये जीवस्यैव सत्त्वेन शिवाभावेन भोग्यशिवानन्दाभावप्रसङ्गः। तस्माज्जीवस्य न शिवस्वरूपैक्यं सम्भवति। किं तु ताम्रस्य रसगुडिकादिवेधेन कालिमविगमेन स्वर्णताप्राप्तौ स्वर्णैक्योक्तिरिव विश्वामित्रमुनेस्तपोबलेन क्षात्रियत्वाविगमेन ब्राह्मण्यप्राप्तौ ब्राह्मणैक्योक्तिरिव च जीवस्य ज्ञानबलेन पशुत्वविगमेन स्वगतशिवधर्मभूताशिवत्वाभिव्यक्तौ शिवैक्योक्तिरित्येवाभ्युपगन्तव्यमिति चेत्; उच्यते; गुणगुणिनोरिव

प्रकाशतदाश्रययोरिव च ईषद्भेदे सत्यभेद एवैकत्वम् । अत एव बद्धमुक्तादिव्यवस्थोपपत्तिः । यथा हि—गुणगुणिनोरभेदसत्त्वेऽपि गुणस्य रूपस्यैव धर्मत्वं चक्षुर्मात्रग्राह्यत्वं च, गुणिनो घटादेरेव धर्मित्वं त्वगिन्द्रियेणापि ग्राह्यत्वं चेति व्यवस्थोपपद्यते। तयोर्भेदस्यापि सत्त्वात् । तथैव शिवजीवयोरैक्यसत्त्वेऽपि जीवस्यैव किञ्चिज्ज्ञत्वं बन्धादियोगश्च, शिवस्यैव सर्वज्ञत्वं नित्यमुक्तत्वादियोगश्चेति व्यवस्थोपपद्येत । शिवजीवयोर्भेदस्याप्यङ्गीकारात् । तच्चैक्यं न मुक्तिदशायामुत्पद्यते । तथात्वे विनाशित्वप्रसङ्गात् । तथा च संसारदशायामप्यैक्यमस्त्येव । किं तु आवरणवशात्तदा अनभिव्यक्तं आवरणापगमे मुक्तावभिव्यज्यते । यथाह्यरणिप्रभृतिषु काष्ठेषु तादात्म्येनावस्थित एव काष्ठाकारतिरोहितो वह्निः पश्चान्मथनाक्रियादग्धावारकगुरुकठिनद्रवपार्थिवाप्यावयवरूपकाष्ठाकारत्वेनाभिव्यज्यते तद्वत् ॥

न च तथा सति वस्त्रस्याप्यावरणभूततन्त्वाकारापगमे सति अभिव्यक्तेरेवोत्पत्तिरूपत्वेन अत्राप्यावरणापगमे अभिव्यक्तेरुत्पत्तिरूपत्वमेवेति मुक्तेरनित्यत्वप्रसङ्गदोषतादवस्थ्यमिति वाच्यम् । यत्र कारणरूपाश्रयगतावस्थाविशेषेणावृतं तदवस्थापनयनेनाभिव्यज्यते तत्रोत्पत्तिः; यत्र तु आश्रयगतद्रव्यान्तरेणावृतं तन्निवृत्त्याभिव्यज्यते तत्राभिव्यक्तिरित्युत्पत्त्यभिव्यक्त्योर्भेदाभ्युपगमात् । वस्त्रस्याश्रयभूततन्त्ववस्थारूपावरणापगमे अभिव्यक्तेरुत्पत्तिरूपत्वेऽपि प्रकृते आश्रयभूतात्मनि विद्यमानमलरूपद्रव्यान्तरेणावृतत्वाच्छिवैक्यस्य तदावरणनिवृत्तौ तृणशैवालाद्यपगमे कूपे पूर्वमेव विद्यमानजलस्येवाभिव्यक्तेरुत्पत्तिरूपत्वाभावान्नानित्यत्वदोषप्रसङ्गः । एतेन शिवैक्यस्य पूर्वमेव सत्त्वे तादर्थ्येन पुरुषप्रवृत्तिवैयर्थ्यमित्येतदपास्तम् । तदाच्छादकमलनिवृत्तौ कृतिसाध्यत्वपर्यवसानात् । तथा च घटाकाशमहाकाशदृष्टान्तेन नदीसमुद्रदृष्टान्तेन च वेदागमेष्वैक्योक्तिरुक्तेषद्भेदगर्भा-

भेदरूपतादात्म्यमात्रसाधर्म्यविषया । न त्वात्यन्तिकाभेदांशपूर्वसिद्धभेदहान्यंशावपि दृष्टान्तदार्ष्टान्तिकयोस्तत्र विवक्षितौ । न हि दृष्टान्तदार्ष्टान्तिकयोस्तत्र सर्वात्मना साम्यं विवक्षणीयम् । तयोरभेदापत्त्या दृष्टान्तदार्ष्टान्तिकभावस्यैवोच्छेदापत्तेः । तथा च न पूर्वोक्तदोषः ॥

ननु तथापि शिवैक्यमात्रमपि न मोक्षः । तस्य सुखदुःखाभावेतरत्वेन स्वतः पुरुषार्थत्वाभावात् । न चानन्दानुभवेन पुरुषार्थत्वम् । आनन्दसद्भावे मानाभावात् । आनन्दभोगसद्भावे भोगस्याध्यासरूपत्वेन संसारित्वापत्तेः । क्वचिदानन्दादिश्रवणस्य पूर्णत्वादिपरत्वादिति चेत् ; न ।

निस्तत्त्वे निष्कलीभूते विन्दत्यात्मनि यत्सुखम् ।
निर्विकल्पमचिन्त्यं च हेतुदृष्टान्तवर्जितम् ॥
तत्सुखं परमं प्रोक्तमात्यन्तिकमनौपमम् ।
निरस्य विषयासङ्गं मनोवृत्तिं विवर्जयेत् ॥
यदा यात्युन्मनीभावं तदा तत्परमं सुखम् ।

इति सर्वज्ञानोत्तरगतवचनेन सुखस्य प्रतिपादनात् । अत्र दुःखनिवृत्त्यात्मकं सुखमिति केषाञ्चिद्व्याख्यानं सुखशब्दमुख्यार्थपरित्यागे हेत्वभावादनुपपन्नम् ॥

न च सुखस्य जन्यत्वनियमात् सुखानुपपत्तिः । एवं सति ज्ञानस्याप्यभावप्रसङ्गात् । प्रमाणबलान्नित्यज्ञानाभ्युपगमे नित्यसुखस्याप्यविरोधात् । अत एव सुखभोक्तृत्वे संसारित्वं स्यादित्यपास्तम् । अनित्यसुखभोक्तृत्व एव संसारित्वोपगमात् । अन्यथा ज्ञानादिमत्त्वेन संसारित्वापत्तेः । तस्मान्न नित्यशिवानन्दभोगेन संसारित्वप्रसङ्गः ॥

न चैवं शिवैक्यापन्नजीवस्यापि सुखस्वरूपत्वेन मोक्षस्वरूपसुखानुभव एवास्तु, किं शिवानन्दानुभवाभ्युपगमेनेति वाच्यम् । यथा

रसवदपि रसनेन्द्रियं स्वेतरद्रव्यगतमेव रसं गृह्णाति । न तु स्वगतम् । यथा वा प्रकाशवदपि चक्षुरिन्द्रियं न स्वप्रकाशेन सूर्यादिप्रकाशं गृह्णाति । तथा सति सूर्यादिप्रकाशं विनैव घटादिरूपग्रहणापत्तेः । किं तु सूर्यादिप्रकाशेनैव चक्षुर्गृह्णाति । तथा च सूर्यादिप्रकाशानुभवे चक्षुःप्रकाश उपयुज्यते । तद्वदेव शिवानन्दानुभव एव जीवन्मुक्तस्य ज्ञानानन्दस्वरूपमुपयुज्यते । न तु स्वात्मगतसुखानुभव इति संप्रदायः ॥

एतेन मन्त्रौषधादिवीर्येण विषशक्तिप्रतिबन्धवज्ज्ञानावारकाज्ञानस्यापि ज्ञानेन शक्तिप्रतिबन्धमात्रं क्रियते । न तु ज्ञानेन निवृत्तिः क्रियत इति मतमपास्तम् । तथा सति शिवैक्यालाभात् । लाभे च शिवेऽप्यज्ञानप्रसङ्गात् । शिवागमेषु अज्ञाननित्यत्ववचनानामनादित्वेन बहुकालावस्थायित्वपरत्वात् ॥

तस्मात्पूर्वोक्तप्रकारेण तत्त्वसाक्षात्कारोदये मलासंस्पर्शे आगामिकर्मास्पर्शे च सति सञ्चितकर्मणां च दीक्षया निवृत्तौ प्रारब्धस्य च भोगेन क्षये मलकर्मोभयाभावेन मायाद्वयस्यागामिशरीराद्युत्पादनशक्तिविलोपेन प्रारब्धकर्मभोगेन वर्तमानशरीरादिनाशे शिवानन्दानुभवविरोधिपाशापगमेन शिवेनैक्यं प्राप्यालौकिकनिरतिशयशिवानन्दानुभवात्मकपरममुक्तिं प्राप्नोतीति सिद्धम् ।

इति श्रीमदतिवर्णाश्रमाचार्यवर्यशैवपरिपालकशिवाग्र-
योगीन्द्रज्ञानशिवाचार्यविरचितायां
शैवपरिभाषायां मुक्तिनिरूपणं
नाम पञ्चमः परिच्छेदः
समाप्तोऽयं ग्रन्थः
शिवं भवतु

———

मैसूरु राजकीय प्राच्यकोशागारे परिष्कृत्य देवनागराक्षरैः संमुद्रय प्रकाशिताः

# संस्कृतग्रन्थाः

---

| ग्रन्थनाम | मूल्यम् रू. आ. |
| --- | --- |
| * 1 आपस्तम्बगृह्यसूत्रम्, सुदर्शनार्यप्रणीततात्पर्यदर्शनाख्यभाष्यसहितम्. .... | 1 12 |
| * 2 आपस्तम्बयज्ञपरिभाषासूत्रम्, हरदत्तकपर्दिस्वामिभाष्याभ्यां सहितम्. ... | 1 0 |
| * 3 माधवीयधातुवृत्तिः (अदादि-दिवादि-जुहोत्यादयः) .... | 2 0 |
| * 4 तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा, भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, प्रथमसंपुटम्. .... | 2 8 |
| * 5 तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा श्रीभट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, द्वितीयसंपुटम्. ... | 2 8 |
| * 6 दक्षिणामूर्तिस्तोत्रम्, सुरेश्वराचार्यटीकासहितम् .... | 1 4 |
| * 7 तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, तृतीयसंपुटम्. .... | 3 0 |
| * 8 श्रीभगवद्गीता, श्रीशंकराचार्यभाष्यसहिता ... | 2 12 |
| * 9 तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्ययुता च, चतुर्थसंपुटम्. .... | 3 0 |

---

*एतच्चिह्नाङ्किता ग्रन्थाः सम्प्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| *10 | मण्डलब्राह्मणोपनिषत् | ... | 0 | 6 |
| *11 | सौन्दर्यलहरी | .... | 1 | 0 |
| *12 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, पञ्चमसंपुटम्. | | 3 | 0 |
| *13 | ,, ,, दशमसंपुटम् | ... | 3 | 2 |
| *14 | ,, ,, एकादशसंपुटम् | .... | 3 | 0 |
| *15 | आपस्तम्बधर्मसूत्रं हरदत्ताचार्यप्रणीतोज्ज्वलाख्यवृत्तियुतम्. | .... | 1 | 10 |
| *16 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, अष्टमं संपुटम्. | .. | 3 | 0 |
| *17 | ,, ,, नवमं संपुटम् | ... | 2 | 4 |
| *18 | ,, ,, द्वादशं संपुटम् | ... | 1 | 12 |
| *19 | श्रीशंकराचार्यप्रबन्धावली, प्रथमसंपुटम्, (श्रीविष्णुसहस्रनाम-सनत्सुजातीयभाष्यम्). | .. | 1 | 4 |
| 20 | ,, द्वितीयसंपुटम्, (अपरोक्षानुभूतिः, शतश्लोकी, हरिस्तुतिः, दशश्लोकी च). | . | 1 | 4 |
| *21 | ,, तृतीयसंपुटम्, (उपदेशसहस्री गद्यपद्योभयात्मिका, रामतीर्थव्याख्यायुता). | .... | 2 | 0 |
| *22 | ,, चतुर्थसंपुटम्, (आत्मबोध विवेकचूडामणि-वाक्यवृत्ति-स्वात्मनिरूपण-योगतारावली-सर्ववेदान्तसिद्धान्तसारसंग्रहाः). | ... | 1 | 0 |
| *23 | माधवीयधातुवृत्तिः भ्वादौ प्रथमसंपुटम् | .... | 2 | 0 |
| *24 | ,, ,, द्वितीयसंपुटम् | .... | 2 | 0 |
| *25 | गोत्रप्रवरनिबन्धकदम्बम् | .... | 2 | 0 |
| *26 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्यसहितम्, प्रथमसंपुटम् (1-4 प्रश्नाः). | .... | 1 | 12 |

* एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | मूल्यम्—रू. | आ. |
|---|---|---|---|---|
| *27 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीय-भाष्यसहितम्, द्वितीयसंपुटम् (5–6 प्रश्नौ). | ... | 1 | 0 |
| *28 | एकाग्निकाण्डः सस्वरचिह्नः, हरदत्तीयभाष्यसहितः | .... | 1 | 4 |
| *29 | तैत्तिरीयारण्यकम्, सस्वरचिह्नं, भट्टभास्करीय-भाष्यसहितं तृतीयसंपुटम् (7-8 प्रश्नौ). | .... | 1 | 0 |
| *30 | ब्रह्ममीमांसा, श्रीकण्ठभाष्यसहिता .... | ... | 2 | 0 |
| *31 | माधवीयधातुवृत्तिः, स्वादिमारभ्य समग्रा | ... | 2 | 0 |
| *32 | बोधायनगृह्यसूत्रम्, सपरिशिष्टं (प्रथममुद्रणं) | .... | 2 | 4 |
| *33 | तैत्तिरीयप्रातिशाख्यम्, (वैदिकाभरणत्रिभाष्य-रत्नाख्यव्याख्याद्वययुतम्.) | ... | 4 | 0 |
| *34 | बोधायनधर्मसूत्रम्, गोविन्दस्वामिविवरणसमेतम्. | ... | 3 | 0 |
| *35 | भाट्टदीपिका, प्रथमसंपुटम् (तृतीयाध्याये तुरीय-पादान्ता). | .. | 3 | 0 |
| *36 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम् भट्टभास्करीय-भाष्ययुतम्. | .... | 3 | 8 |
| *37 | कौटलीयमर्थशास्त्रम् (प्रथममुद्रणम्) .. | .... | 3 | 0 |
| *38 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीय भाष्यसहितम् (तृतीयाष्टके 1-7 प्रश्नाः). | ... | 3 | 8 |
| *39 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रका-शिका-चन्द्रिका-प्रकाशसहितम्, I सं. | ... | 3 | 0 |
| *40 | भाट्टदीपिका, द्वितीयसंपुटम्, (तृतीयाध्याये पञ्चम-पादप्रभृति सप्तमाध्यायान्तम्). | ... | 3 | 0 |
| 41 | खादिरगृह्यसूत्रम्, रुद्रस्कन्दीयवृत्तिसहितम् | .... | 1 | 0 |
| *42 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीय-भाष्ययुतम् (तृतीयाष्टके 8-12 प्रश्नाः). | .... | 2 | 4 |
| 43 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, संस्कारकाण्डः | .... | 1 | 8 |
| 44 | ,, ,, आह्निककाण्डः | .... | 2 | 8 |

* एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रययात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | मूल्यम्—रू. | आ. |
|---|---|---|---|
| 45 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे प्रथमसंपुटम्. .. | 2 | 0 |
| *46 | भाट्टदीपिका, तृतीयसंपुटम् (अष्टमाध्यायप्रभृति दशमे 4 पादान्ता). ... | 2 | 8 |
| *47 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, II सं. समन्वयाधिकरणप्रभृति आकाशाधिकरणान्तम्. . | 3 | 0 |
| 48 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे द्वितीयसंपुटम्. . | 3 | 0 |
| *49 | भाट्टदीपिका, खण्डदेवकृता, चतुर्थसंपुटम् (दशमाध्याये पञ्चमपादप्रभृति समग्रा.) .... | 3 | 0 |
| 50 | गौतमधर्मसूत्रम्, मस्करिभाष्ययुतम् .. | 3 | 8 |
| 51 | अलङ्कारमणिहारः, प्रथमसंपुटम् (समासोक्त्यलङ्कारान्तः). ... | 3 | 0 |
| 52 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, श्राद्धकाण्डः ... | 3 | 4 |
| 53 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, III सं. (प्राणाधिकरणप्रभृति प्रथमे द्वितीयपादान्तम्). ... | 4 | 0 |
| *54 | कौटलीयमर्थशास्त्रम् (द्वितीयमुद्रणम्) ... | 3 | 0 |
| 55 | बोधायनगृह्यसूत्रम्, सपरिशिष्टम् ,, .... | 2 | 4 |
| 56 | स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, आशौचकाण्डः. . | 1 | 8 |
| 57 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीयकाचित्कसायणभाष्याभ्यां युतम्, द्वितीयाष्टकम्. ... | 3 | 8 |
| 58 | अलङ्कारमणिहारः, द्वितीयसंपुटम् (परिकरालङ्कारप्रभृति मालादीपकालङ्कारान्तः). ... | 3 | 8 |

---

* एतच्चिह्नाङ्किता ग्रन्थाः सम्प्रति विक्रयायात्र नोपलभ्यन्ते,

| | ग्रन्थनाम | मूल्यम्—रू. | आ. |
|---|---|---|---|
| 59 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, IV सं (प्रथमाध्याये तृतीयपादे आदितः अपशूद्राधिकरणान्तम्. .. | 3 | 8 |
| 60 | काव्यप्रकाशः, मम्मटभट्टकृतः, माणिक्यचन्द्रकृतसङ्केताख्यटीकायुतः. .. | 3 | 8 |
| 61 | आयुर्वेदसूत्रम्, योगानन्दनाथभाष्यसहितम् . | 2 | 0 |
| 62 | अलंकारमणिहारः, तृतीयसंपुटम् (सारालंकारप्रभृतिहेत्वलंकारान्तः). . | 2 | 8 |
| 63 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् I सं. (1–5 अध्यायाः). .. | 2 | 0 |
| 64 | कौटलीयमर्थशास्त्रम्, (तृतीयमुद्रणम्) . | 3 | 0 |
| 65 | अर्थशास्त्रपदसूची प्रथमसंपुटम् . | 2 | 8 |
| 66 | „ द्वितीयसंपुटम् .. .. | 2 | 8 |
| 67 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम्, II सं. (6–10 अध्यायाः). . | 2 | 0 |
| 68 | अर्थशास्त्रपदसूची, तृतीयसंपुटम् . .... | 2 | 0 |
| 69 | अभिलषितार्थचिन्तामणिः, प्रथमसंपुटम् | 2 | 0 |
| 70 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम्, III सं. (11–15 अध्यायाः). . | 1 | 8 |
| 71 | सरस्वतीविलासः, व्यवहारकाण्डः .. . | 2 | 8 |
| 72 | अलंकारमणिहारः, चतुर्थसंपुटम् (रसवदलंकारप्रभृति समग्रः). .. | 2 | 4 |
| 73 | आपस्तम्बशुल्बसूत्रम्, कपर्दीय — करविन्दीय — सुन्दरराजीयव्याख्याभिस्सहितम्. .. | 2 | 12 |
| 74 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्यव्याख्यायुतम्, प्रथमपरिच्छेदः. . | 3 | 0 |
| 75 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिकाटीकायुता, I सं. (प्रथमपरिच्छेदे विश्वमिथ्यात्वप्रभृत्यागमादिबाधोद्धारान्ता). ... | 3 | 12 |

| | ग्रन्थनाम | मूल्यम्—रू. | आ. |
|---|---|---|---|
| 76 | तत्त्वमुक्ताकलापः, वेदान्ताचार्यकृत-सर्वार्थसिद्धि तद्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः, प्रथमो जडद्रव्यसरः. .... | 4 | 0 |
| 77 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्य-व्याख्यायुतम्, II सं (द्वितीय परिच्छेदे विधि-वादान्तम्). ... | 2 | 0 |
| 78 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिका-टीकायुता, II सं. प्रथमपरिच्छेदे असतस्साध-कत्वोपपत्तिप्रभृति अविद्याप्रतिपादकश्रुत्युपप-त्तिपर्यन्ता. .... | 3 | 4 |
| 79 | तर्कताण्डवं न्यायदीपाख्यव्याख्यायुतम्, III सं. .. | 2 | 0 |
| 80 | अद्वैतसिद्धिः गुरुचन्द्रिकोपेता, III संपुटम् .... | 2 | 4 |
| 81 | तत्त्वमुक्ताकलापः, वेदान्ताचार्यकृत सर्वार्थसिद्धि-तद्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः, II सं. .... | 3 | 0 |
| 82 | तर्कताण्डवं, न्यायदीपाख्यव्याख्यायुतम्, IV सं. .... | 2 | 4 |
| 83 | वाक्यार्थरत्नं सुवर्णमुद्रिकाख्यव्याख्यासमलङ्कृतम् .. | 1 | 0 |
| 84 | श्रीमदुमास्वामिविरचितं तत्त्वार्थसूत्रम्, सुख-बोधाख्यवृत्तियुतम्. ... | 2 | 4 |
| 85 | शङ्कराचार्यविरचिता लक्ष्मीधरव्याख्यासमलंकृता सौन्दर्यलहरी, भावनोपनिषत् भास्कररायभाष्य-सहिता, देवीपञ्चस्तवी च. (द्वितीयमुद्रणम्) .... | 2 | 8 |
| 86 | श्रीवेदान्ताचार्यविरचितं यादवाभ्युदयम्, श्रीमद-प्पय्यदीक्षितेन्द्रविरचितव्याख्या समलङ्कृतम्, सर्गाः 13-18. ... | 3 | 4 |
| 87 | आपस्तम्बश्रौतसूत्रम् श्रीरामाग्निचिद्वृत्तिसहितधूर्त-स्वामिभाष्यभूषितम्, I सं. प्रश्नाः 1—5. ... | 4 | 0 |
| 1. | मैसूरुप्राच्यकोशागारस्थलिखितसंस्कृतग्रन्थ-सूची सविवरणा, I सं. वेदाः (संहिता, ब्राह्मणं, आरण्यकं, उपनिषत्, मन्त्रसंग्रहश्च). ... | 3 | 12 |
| 2. | ,, द्वितीयं संपुटम्—धर्मशास्त्रम् (स्मृतिः) | | |
| 3. | मैसूरु प्राच्यकोशागारस्थ मुद्रितसंस्कृतपुस्तक-प्रदर्शिनी. .... | 2 | 12 |

## ಮೈಸೂರು ಗೌರ್ನ್ಮೆಂಟ್ ಓರಿಯಂಟಲ್ ಲೈಬ್ರರಿಯಿಂದ ಪ್ರಕಟಿಸಲ್ಪಟ್ಟ

## ಕನ್ನಡ ಗ್ರಂಥಗಳು

---

| | | ಬೆಲೆ | |
|---|---|---|---|
| | | ರೂ | ಆ. |
| *1 | ಪಂಪಮಹಾಕವಿಯ ಆದಿಪುರಾಣ ... ... | 2 | 8 |
| *2 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಮೊದಲನೆಯ ಮುದ್ರಣ) ... | 2 | 12 |
| 3 | ಸದಾನಂದಯೋಗಿಯ ಮಹಾಭಾರತ (ಪೌಲೋಮಾಸ್ತಿಕಪರ್ವಗಳು). ... | 1 | 8 |
| *4 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಸಂಭವಪರ್ವ ... | 2 | 0 |
| *5 | ,, ಜತುಗೃಹಾದಿಪರ್ವ ... | 1 | 12 |
| *6 | ,, ಸಭಾಪರ್ವ ... ... | 1 | 12 |
| 7 | ,, ಅರಣ್ಯಪರ್ವ ... ... | 2 | 0 |
| *8 | ,, ವಿರಾಟಪರ್ವ ... ... | 1 | 8 |
| 9 | ಲಿಂಗಣ್ಣನ ಕೆಳದಿನೃಪವಿಜಯ ... ... | 1 | 8 |
| 10 | ಸೋಮರಾಜನ ಉದ್ಭಟಕಾವ್ಯ ... .. | 2 | 0 |
| *11 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಎರಡನೆಯ ಮುದ್ರಣ) ... | 2 | 12 |
| *12 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಉದ್ಯೋಗಪರ್ವ .. | 1 | 2 |
| 13 | ಸೋಮನಾಥನ ಅಕ್ರೂರಚರಿತ್ರೆ ... ... | 1 | 0 |
| 14 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. I ... ... | 2 | 4 |
| 15 | ಗೋವಿಂದವೈದ್ಯನ ಕಂಠೀರವನರಸರಾಜವಿಜಯ ... | 2 | 8 |
| 16 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. II ... .. | 1 | 4 |
| 17 | ವೀರಭದ್ರನೃಪಾಲನ ವೀರಭದ್ರವಿಜಯ ... ... | 1 | 4 |
| 18 | ಜನ್ನನ ಅನಂತನಾಥಪುರಾಣ . ... ... | 2 | 0 |
| *19 | ಸಕಲವೈದ್ಯಸಂಹಿತಾಸಾರಾರ್ಣವ ಸಂ I ... ... | 1 | 14 |
| *20 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಭೀಷ್ಮಪರ್ವ ... ... | 1 | 0 |
| *21 | ,, ದ್ರೋಣಪರ್ವ .. ... | 1 | 12 |
| 22 | ನಾಗವರ್ಮನ ಕಾವ್ಯಾವಲೋಕನ (ದ್ವಿತೀಯ ಮುದ್ರಣ) .. | 1 | 8 |
| *23 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಕರ್ಣಪರ್ವ ... ... | 2 | 4 |
| 24 | ,, ಶಲ್ಯಗದಾಪರ್ವಗಳು ... | 1 | 0 |

---

* ಈ ಗುರ್ತಿರುವ ಗ್ರಂಥಗಳು ಈಗ ಬೆಲೆಗೆ ದೊರೆಯುವುದಿಲ್ಲ.

# LIST OF WORKS PUBLISHED BY THE GOVERNMENT ORIENTAL LIBRARY, MYSORE

---

## A.—Sanskrit Publications.

| No. | Title | Price Rs | a. |
|---|---|---|---|
| *1 | Apastamba Grihya Sutra with the commentary of Sudarsanacarya . .. ... | 1 | 12 |
| *2. | Apastamba Paribhasha Sutra with the commentaries of Haradatta and Kapardi Swami ... | 1 | 0 |
| *3 | Madhaviya Dhatuvritti, Vol II, Part I (Adādi-Divādi Juhotyādi) .. . | 2 | 0 |
| *4 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Swarapatha, Vol I | 2 | 8 |
| *5 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. II ... .. ... | 2 | 8 |
| 6 | Dakshinamurtistotra with the commentary of Suresvaracharya .. ... ... | 1 | 4 |
| *7 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. III ... .. .. | 3 | 0 |
| *8 | Bhagavadgita with the commentary of Sankaracarya .. ... . | 2 | 12 |
| *9 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha. Vol IV ... ... ... | 3 | 0 |
| *10. | Mandala Brahmanopanishad with a commentary ... | 0 | 6 |
| *11 | Saundaryalahari with the commentary of Lakshmidhara, Bhavanopanishad with a commentary, and Devīpancastavī ... ... | 1 | 0 |
| *12 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol V .. ... ... | 3 | 0 |
| *13. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol X ... ... .. | 3 | 0 |

---

*N.B.*—Numbers marked thus * are out of stock

| | | Price Rs | a. |
|---|---|---|---|
| *14 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol XI . ... .. | 3 | 0 |
| *15 | Apastamba Dharma Sutra with the commentary called Ujjvala .. ... ... ... | 1 | 12 |
| *16 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol VIII .. ... | 3 | 0 |
| *17 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol IX . ... ... | 2 | 4 |
| *18 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol XII ... ... .. | 1 | 12 |
| *19 | Sankaracarya's Miscellaneous Works, Vol I, commentaries on Vishnusahasranama and Sanatsujātīya ... ... ... | 1 | 4 |
| *20. | Sankaracarya's Miscellaneous Works, Vol II, Aparokshānubhūti, Satasloki, Haristuti and Dasasloki with a commentary .. .. | 1 | 4 |
| *21 | Sankaracarya's Miscellaneous Works, Vol III, Upadesasāhasri with a commentary .. | 2 | 0 |
| *22 | Sankaracarya's Miscellaneous Works, Vol IV, Atmabodha, Vivekacūḍāmani, Vākyavritti, Svātmanirūpana, Yogatārāvali Sarva vedanta-siddhanta sārasangraha .. . | 1 | 0 |
| *23 | Madhaviya Dhatuvritti, Vol I, Part I (Bhvādi)... | 2 | 0 |
| *24 | Madhaviya Dhatuvritti. Vol. I, Part II (Bhvādi) . | 2 | 0 |
| *25. | Gotra-pravara-nibandha-kadambakam .. | 2 | 0 |
| *26 | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. I ... | 1 | 12 |
| *27 | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. II ... | 1 | 0 |
| *28. | Ekāgnikānda with the commentary of Haradatta with Svarapatha . . | 1 | 4 |
| *29 | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol III . | 1 | 0 |
| *30 | Brahmamimamsa with the commentary of Srikantha | 2 | 0 |
| *31 | Madhaviya Dhatuvritti, Vol II, Part II (Svadi and Curadi) ... .. .. | 2 | 0 |
| *32 | Bodhayana Grihya Sutra with Parisishta .. | 2 | 4 |
| *33 | Taittiriya Pratisakhya with Vaidikābharana and Tribhāshyaratna ... . | 4 | 0 |

*N B* —Numbers marked thus* are out of stock

